# SURATHA CHARITAM
OF
# Pt. KSHEMDHARI SINHA

( Published with the financial assistance from the Ministry of Education, Govt. of India )

*Edited by*

**Pt. (Dr.) Tejnath Jha** *Vidya-Varidhi ( Ph. D. )*

*Published by*

**Prof. Buddhidhari Sinha**

AND

**Dr. Jaydhari Sinha,** *M. A. (Double), Ph. D.*

Sons of the Author

MADHUBANI

1967

# भूमिका

अयि विद्याचणा विचक्षणाः!

श्रीमता पुरस्तादुपस्थापयन्निदमभिनव "सुरथचरितम्" महाकाव्यममन्दमानन्दमनुविन्दे। नाविदितचरमिदं यदुपासनाप्रसादादधिभारतं मिथिलाञ्चलेषु सहस्रशः सिद्धाः पुरुषा गीर्वाणवाणीवरभाजनानि। मिथिलाराज्योपार्जकस्य महामहोपाध्यायमहेशठक्कुरस्य कुलमित्थमेव चिराद् विश्रुतम्। कुञ्जरयास्य कतिपये शास्त्रतत्त्वविदो महापुरुषाः स्वाचयावदानेन संस्कृतवाङ्मयकोश समवीवृधन्नित्यपि प्रथितमेव। वर्त्तमानेऽपि शताब्दे कुलमिद सद्गुणेनानेन न विरहितमित्यस्य देदीप्यमानं निदर्शनं महाकाव्यस्यास्य प्रणेता तत्र भवान् "श्रीकरसाहेबा"परनामधेयो दिवंगतः पण्डित क्षेमधारिसिंहशर्मा। सत्यमभिहितम्—

तेषा गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः
स्वच्छन्द ध्वान्तधाराधररुचिरुचिरेसर्वसिद्धिं गतानाम्॥
—कर्पूरस्तोत्रम्।

अपि च,

तेषां वक्त्रारविन्दे विहरति मधुरा गद्यपद्यावलीगी—
र्मातश्चन्द्रार्धचूडे सकलभयहरे सिद्धिभाजा नराणाम्॥
—श्रीवण्ठस्तोत्रम्।

महामहोपाध्यायमहेशठक्कुरस्य पुमपत्यक्रमेणैकादशोऽसौ कविः दरभङ्गामण्डलान्तर्गत-मधुवनी-भूपतेः बाबूहर्षधारिसिंहस्य द्वितीयस्तनूजो दरभङ्गा मण्डलान्तर्गतोद्यान (उजान) वासि-तान्त्रिकप्रवरस्य पण्डित-बद्रीनाथ (झा) शर्मणो दौहित्रः १९५० विक्रमाब्दे फाल्गुन-कृष्ण-दशम्यां जनिं लेभे शिवसायुज्यमाप च २०१८ विक्रमाब्दे चैत्रशुक्लत्रयोदश्याम्। बाल्य एव पितृवियुक्तस्यास्य शिक्षादीक्षे विख्यात-

नाम्नः पितृव्यचरणस्य बाबूतन्त्रधारिसिंहस्य ( दरभङ्गास्थ-चन्द्रधारि-मिथिला-महाविद्यालयसंस्थापकस्य बाबूश्रीचन्द्रधारिसिंहस्य पितु ) अभिभावकत्वे संजाते। मधुवनीस्थ-वाट्सनोच्चाङ्गलविद्यालयादुत्तीर्णप्रवेशिकापरीक्षोऽसौ विश्वविद्यालयीयोच्चशिक्षायै प्रयाग प्रेषितः। धर्मप्राणराजकुलोद्भवोऽसौ यद्यपि १९७४ विक्रमाब्दे पाटलिपुत्र विश्वविद्यालयात् स्नातक ( बी० ए० ) परीक्षामुत्तीर्णवान् किन्तु तीर्थराजवास-त्रिवेणीतटोयाध्ययनोपासनातप प्रभावैर्दर्शनस्य संस्कृतसाहित्यस्य च विश्रुतो विद्वान् बभूव। म० म० डा० सर गङ्गानाथझाशर्मणोऽन्तेवासितया सुरभारतीसेवासौख्य-मलभत। समस्त स्वीयं जीवनमनेनोपास्तावध्ययनमननयोश्च समर्पितम्। दर्शनाना विशेषत शाक्तदर्शनस्याधिमिथिलमय विशेषज्ञोऽभिधीयते स्म। सुतरां प्रतिष्ठिता संस्था वेदान्तविनोदेत्याद्युपाधिभिरमु विभूषयाञ्चक्रु।

आस्तिक पारेजारीयकिशोरकुमारस्यास्य लेखनी तीर्थराजस्य पावनक्षेत्रे १९६७ विक्रमाब्दे वाग्देवतोपास्तौ समर्पिता २०१८ विक्रमाब्द यावत् तल्लीना सती ब्रह्मानन्दमु-निनाय। अमुष्य रचना, भवानीशतनामस्तोत्रम् या सारस्वतोपासना,

"ब्रह्म विष्णु-महेशानां शक्तिमेकां विलक्षणाम्।
मायामात्रेण संभिन्नां वन्देऽहं परदेवताम्॥"

इति मङ्गलाचरणेन समारब्धा, जीवनान्त यावत्तस्या निर्वाह समाचरन्नसौ महाकाव्यस्यास्य 'जीवन्मुक्ति' प्रकरणप्रणयनेन तां सम्पूर्णतामनैषीत्।

विनीततमोऽसौ कवि स्वजीवनसमये कविरूपेण स्वख्यातिं नान्वमोदत। स्वान्त सुखायैवास्य वाणीकृत्स्ने छन्दोबद्धतामीयतु। बह्व्योऽस्य रचना पुत्रादिपरिवारैरेव ज्ञाता व्यक्तिगतमञ्जूषामेवालञ्चक्रु। दिवं गतेऽस्मिन् स्मृतिरक्षणतत्पराभ्यां विद्वद्भ्यां पुत्राभ्यां प्राध्यापकवराभ्यां श्रीबुद्धिधारिसिंहशर्मश्रीजयधारिसिंहशर्मभ्यामन्विष्या-न्विष्य समुद्धृता।

कवेरमुष्य साफल्ये निम्नलिखिता दार्शनिकभावसवलिता नवमव्यो रचना विद्योतन्ते, यास्वष्टाविंशतिशताधिकानि पद्यानि सन्ति।

# आमुखम्

भारतवर्षस्योत्तरस्मिन् भागे देवतानां निलयः, ऋषीणामावासस्तपस्विनां निवासः पुण्यात्मनां तीर्थभूमिर्हिमालयो नाम नगाधिराजः स्वोच्चशृङ्गैः सकलजीवानां निरीक्षणे सततं जागरूकस्तिष्ठति। तत्प्रान्तवर्त्तिनो देशाः पुण्यतमाः स्मर्यन्ते। शतपथ-ब्राह्मणानुसारेण हिमालयतो दक्षिणभागवर्त्तिनो देशाः पूर्वं जलमग्ना आसन्। अत-स्तत्प्रदेशमावाससहं सम्पादयितुमग्निः प्रेरितः। अग्निस्तं प्रदेशमागत्य भूमिं परिशोष्य यज्ञभूमिरूपेण तं परिवर्त्तयामास। इयमेव भूमिः पवित्रतमा यज्ञपूता च सती मिथिला-राजवंशानां शासने 'मिथिला'—नाम्ना प्रसिद्धा संजाता। अद्यापि सा पुण्यतमा भूमिर्मिथिलेति गीयते। अत्रैव राजर्षयो जनकादयः स्वतपस्याबलेन भारतीयाध्या-त्मिकज्ञानविज्ञानस्य तेजः प्रज्वालयामासुः।

प्रायो वैदिककालतः पश्चात् भगवत्याः सरस्वत्याः सेवया ज्ञानार्जने संलग्ना बभूवुः। अगणिता ज्ञानिन ऋषयो मुनयो विद्वांसश्च क्रमशो जन्म लब्ध्वेमां भूमिं पूततमां कृतवन्तः। ज्ञानज्योतिरत्र वैदिककालतः प्रदीप्ता।

परन्तु, न जातु कश्चित् क्षणमपि तिष्ठत्यकर्मकृदिति प्रकृतिनियमः। अत उदय-नाचार्येणाप्युच्चैर्घोषितम्—'जन्मसंस्कारविद्यादेः स्वाध्यायकर्मणोर्ह्रासदर्शनतो ह्रासः सम्प्रदायस्मीयताम्।" ह्रासो वृद्धिश्च सृष्टिप्रलयवत् प्रकृतिनियम एव। तथापि परम्परा-गतज्ञानविज्ञानचर्चा, ज्ञानिनां समादरः, सम्मेलनञ्च विद्यास्वचला भक्तिर्देवतासु श्रद्धा सदैव मिथिलायामासीत्। अद्यापि नैव तिष्ठतीति कथयितुं न शक्यते। धनिका अपि श्रद्धावन्तस्तपस्विनो ज्ञानिनो जिज्ञासवो बभूवुः। तेषां सम्पत्तिः परोपकारायै-वासीत्। समये-समये विदुषां सम्मेलने तत्त्वविचारो धनिकानां राजप्रासादे प्रवर्त्तते स्म। सर्वेषां राज्ञां महाराजानां धनिकानामपि मिथिलायामादर्शभूतो महाराजो जनक एवासीद् यस्य कर्मनैष्ठिकत्वं सर्वत्र प्रसिद्धमेव। यथा लोकसभासु याज्ञवल्क्यादय ऋषयस्तपस्विनो ज्ञानिनो धर्मविशेषचर्चां कुर्वन्ति स्म तत्त्वविचारे संलग्नाश्चाभवन् तथैव मिथिलायां मिथिलेन्द्रेषु ऋषिकल्पा विद्वांसो धर्मनिर्णये तत्त्वनिर्णये च सदैव निरता बभूवुः। एवं जिज्ञासापरम्परा तत्र मिथिलायां प्रवर्त्तते स्म।

तस्यामेव परम्परायां दरभङ्गाराजधान्यां ये केचन राजानः पूर्वं पश्चादपि महेशठक्कुरादयो बभूवुः, तत्संपर्कान् मधुवन्यादिकेन्द्रेष्वपि ये तत्त्वजिज्ञासव आसन्, ते सर्वेऽपि विदुषां माहात्म्येन ज्ञानविज्ञानचर्चां कारयन्ति स्म। इत्थं प्रवर्त्तितायां परम्परायां मधुवनीनगर एकः प्रसिद्धः केन्द्रः संजातः। तत्र खलु महान्तस्तपस्विनो दरभङ्गाराजवंशीयाः संलग्ना आसन्। 'राजा प्रजारञ्जनादि' ति नियमानुसारेण स्वसेवकानां प्रजावर्गाणां कल्याणाय ते कदापि नालस्यमावहन्ति स्म। पूर्वकालीनशासकवदेवासन्।

तत्रैको महान् तपस्वी हर्षधारिसिंहः स्वजन्मना मिथिला भूषितवान्। तस्य वंशे वेदान्तविनोदः क्षेमधारिसिंहो राजकार्यनिपुणोऽपि विद्याभ्यासी काव्यरसिकस्तत्त्वजिज्ञासुश्च समजायत। तेन न केवलं स्वकुलपरम्परानुसारेण तपश्चर्या कृताऽपि तु विशिष्टपण्डितेभ्यः सुदुस्तरमपि शास्त्रज्ञानमुपलब्धम्। तेन बहून्याध्यात्मिकस्तोत्राणि विरचितानि। तस्य शैव-वैष्णव-शाक्तपरम्परायां सुदूरा दृष्टिरप्यासीत्। तेन 'सुरथचरितं' नाम महाकाव्यमपि रचितम्। महाकाव्येऽस्मिन् महाकाव्यस्य सर्वाणि लक्षणानि सन्त्येव। सहैव काव्यगुणानां सन्निवेशोऽपि स्थाने स्थाने दृश्यते। इयमेवास्य महती कृतिः। अस्मिन्नुपासके कीदृशी देवताभक्तिराध्यात्मिकचिन्तनं काव्यरसास्वादनं काव्यनिर्माणकौशलञ्चासीदिति तु महाकाव्यावलोकनेनैव सर्वे अनायासेन ज्ञातुं शक्नुवन्ति। अयञ्च परम्परारक्षकः प्रजापालने सदैव निरतः। अस्य पुत्रद्वयं श्रीबुद्धिधारिसिंहः श्रीजयधारिसिंहश्च। इमावप्युभौ विद्वांसौ कर्मनिष्ठौ परम्परानिर्वाहकौ च स्तः। उभावपीमौ ममाशीर्वादभाजौ। मनसा वाचा कर्मणा ज्ञानविज्ञानसेवायां मिथिलापरम्परारक्षणे च संलग्नौ भवेतामित्येव मे आशीर्वचनम्।

श्रीउमेशमिश्रः

८-६-१९६७

( महामहोपाध्याय डाक्टर श्रीउमेशमिश्र,
भूतपूर्वनिर्देशको मिथिला-संस्कृत-विद्यापीठस्य, भूतपूर्वोपकुलपतिश्च कामेश्वरसिंह दरभङ्गासंस्कृतविश्वविद्यालयस्य )

त्वादन्ते समाधिजीवन्मुक्तिवर्णनाचात्राङ्गी रसः शान्तः। किन्तु वर्णन-वैशद्यक्रमेण शृङ्गारस्यापि प्राशस्त्यमस्त्येव। अङ्गरूपेण यथास्थलं हास्य-करुण-रौद्र वीर-भयानक-बीभत्साद्भुतरसा अपि वर्णिताः। उदाहरणान्यधस्ताद्दास्यन्ते। मुख-प्रतिमुख-गर्भ-विमर्श-निर्वहणाख्याः पञ्चापि नाट्यसन्धयो यथावसरं निवेशिता एव। लक्षणसूत्रघटकेतिहास-पदं पुराणस्याप्युपलक्षणम्। मार्कण्डेयपुराणे एकाशीतितमाध्यायादारभ्य त्रिनवतितमाध्यायपर्यन्तं देवीमाहात्म्यमुपवर्णितमस्ति। इदमेव त्रयोदशाध्यायात्मकं देवीमाहात्म्यं दुर्गासप्तशतीत्युच्यते। सप्तशत्या अस्याः प्रथमाध्यायस्य चतुरधिकशतमन्त्रेषु त्रयोदशाध्यायस्यैकोनत्रिंशन्मन्त्रेषु च संकलनया त्रयोविंशत्यधिकशतमन्त्रेषु वर्णितं कथाभागं सरसकल्पनया पल्लवयित्वाऽष्टादशसर्गेषु सप्तदशाधिकाष्टशतश्लोकेषु गुम्फितवानस्ति कविरधिप्रस्तुतकाव्यम्। नीतिप्रसंगेनार्थे, उपासनया धर्मे, सुरथस्य समाधेश्च भोगवर्णनेन कामे, सुरथस्वराज्यप्रत्यावृत्त्या समाधिमोक्षप्राप्त्या चोपासनारूपधर्मात्र मुख्यं प्रयोजनमिति दर्शितम्। आदावाद्याया महाशक्तेर्नमस्क्रिया अस्त्येव। खलनिन्दा-सद्गुण-कीर्त्तनं च यत्र तत्र वर्त्तत एव। नातिस्वल्पा नातिदीर्घा अष्टादश सर्गा सन्त्यत्र। ते च सर्गा एकवृत्तमया अवसानेऽन्यवृत्तकाश्च सन्त्येव। केचन तेषु नानावृत्तमयाश्च। सन्ध्या-सूर्येन्दुरजन्यादीनामपि वर्णनं यथायोगं निबद्धमेव। निदर्शनान्यग्रेयां केषांचिदग्रे दास्यन्ते। नायकस्य सुरथस्य नाम्नाऽस्य महाकाव्यस्य नामकरणं सुरथचरितमिति। सर्गोपादेयकथया सर्गनामानि सन्तीति सर्गान्तपुष्पिकया स्पष्टमेव।

## महाकाव्यस्यास्य संक्षिप्ता कथाः—

महाकाव्यमिदं महाशक्तेर्नमस्क्रियाभिः समारब्धम्। प्रथमं देवीमाहात्म्यवर्णनं ततः कविवंशपरिचयस्ततः कवेर्विनयोक्तयस्ततश्च मुख्या कथा। सा चेत्थम्—कस्यांचित् कोलापुरनगर्यां द्वितीयस्य मनोः स्वारोचिषस्य कुले चैत्रकुलप्रदीपः कश्चित् सुरथो नाम राजा बभूव। स च सर्वथा धीरोदात्तादिगुणमण्डितः स्वमहिष्या मनोरमया सह सुखमयं जीवनं यापयति स्म। दुर्दैववशात् कदाचिच्छक्त्युपासनालब्धपराक्रमेण केनापि बलिनाम्ना शत्रुणा पराक्रान्तः स परमं दैन्यमवाप।

राजलक्ष्म्या विरहितः स गृहलक्ष्म्याऽप्युपेक्षितो बभूव। सत्येवं स निर्वेदाद् वनमेव शिश्रिये। संयोगवशात्तस्मिन्नेव समये तस्मिन्नेव च नगरे कश्चित् समाधिनामा

वैश्योऽपि वसति स्म। सोऽपि पुत्रादिभिः परिक्लिश्यमानो वनं भेजे। वनेषु पर्यटतोस्तयोः सहसा समागमो जातः। तावुद्विग्नौ मनसः शान्त्यर्थं मुनेर्मेधसः शरणं ययतुः। मुनिश्च मायाया माहात्म्यमुपवर्णयन् तामाराधयितुं तावुपदिदेश। उपासनया च जगदम्बायाः सुरथः स्वराज्यं लेभे वैश्यश्च समाधिर्जीवन्मुक्तपदवीम्। ❀

---

❀ आंग्लभाषानूदितदुर्गासप्तशतीभूमिकायां ग्रन्थकर्त्राऽपि लिखितम् तद्यथा

At present, I would only beg to impress upon the reader, the force that is produced in a man through the momentum imparted by the Aradhana meditation, worship or mere devotion to the Devee. For, it is Bhakti or service that brought about the emancipation of Vaishya Samadhi and the enviable glory of King Surath. We find how the king, who could not wean his mind off from the attachment towards the appertenances of his kingdom, had to pray for but glory, *of course that glory was far above the temporal figments; while Vaishya Samadhi, whose mind was desperately detached from his son and wife in course of but three years, gained perfectly renunciative tendency* and realised how useless it was to hanker after exaltation ( अभ्युदय ). Consequently he is now fully prepared for that final Liberation that can only be acquired by renunciation and begs of the Mahamaya the tendency that led him to quit off all attachements towards anything genitive of the self.

So much for the abstract glory of the Premordial Mother (the root cause Mula Prakriti ). Let us now synopsise the main story of the Durga. We have seen how King Surath and Vaishya Samadhi got their desire attained. To be short King Surath was repeatedly attacked by his enemies who at last reduced him to a very sad plight and the unfortunate ruler now divested of all his appertenances was sore in heart and found it advisable to leave the little he had. On plea of hunting he rode off to a deep forest. By chance a Vaishya

## प्रकाशिताः

( १ ) श्रीस्तुतिमाला—भारतीयदर्शनस्य प्रतिशाखाप्रतिपादिका शक्तिस्तुतिः ।
(२-६) शतनामपञ्चिका—भवानी-काली तारा-विष्णु-सूर्याणां शतनामस्तुतयः ।
( ७ ) सुरथचरितं महाकाव्यम्—प्रस्तुतम् ।

## अप्रकाशिताः

( ८ ) कालीककारादिसहस्रनामस्तोत्रम्—शिखरिणीवृत्तौ ।
( ९ ) „ „ —अपरम् „ ।
(१०) ताराककारादिसहस्रनामस्तोत्रम्— „
(११) सूर्यसहस्रनामस्तोत्रम् ।
(१२) श्रीशिवस्तुतिमाला—शिवतत्त्वस्य दार्शनिकमहत्त्वम् ।
(१३) श्रीश्यामातत्त्वमाला—शैवदर्शनप्रतिपादिकाऽऽद्यातत्त्वमाला ।
(१४) श्रीतारातत्त्वमाला—शैवदर्शनप्रतिपादिका द्वितीयातत्त्वमाला ।
(१५) शान्तिमाला ( ऐहिकी )—भर्तृहरिनिर्वेदस्य कवेर्निर्वेदभावप्रदर्शिका ।
(१६) शान्तिमाला ( दिव्या )—नवरात्रे पूज्यानां देवतानां दार्शनिकी वन्दना ।
(१७) चिन्मालास्तोत्रम्—दुर्गासप्तशती पञ्चमाध्याये स्तुतानां विष्णुमायेत्यादित्रयोविंशतिशक्तीनां दशमहाविद्याराधाप्रभृतिशक्तीनां च दार्शनिक-वैज्ञानिकसिद्धान्तानुकूलस्य माहात्म्यस्य षट्पर्यायच्छन्दोनिबद्धैश्चतुश्शतपद्यैर्वर्णनम् ।
(१८) विविधस्तोत्राणि—नानाछन्दोभिर्नानादेवतानां स्तुतिः ।
(१९) अर्चनाख्यातिः—पूजापद्धतिः ।

प० क्षेमधारिसिंहस्य प्रतिभावैदुष्ययोः परिचायिकासु कृतिषु शक्तिमाहात्म्य, विशेषत श्रीदुर्गामाहात्म्यं प्रमुखतां भजते । प्रमाणं तत्रैताश्चतस्रः कृतयः—

( १ ) आंग्लभाषानूदिता दुर्गासप्तशती ।
( २ ) शान्तिमाला-दिव्यप्रकरणम् ।
( ३ ) चिन्मालास्तोत्रम् ।
( ४ ) प्रस्तुतं च सुरथचरितं महाकाव्यम् ।

सुरथचरितमिदं कवेर्भावनायाः प्रौढं व्यापकं च स्वरूपम्। यथाविदितं म० म० महेशठक्कुरकुले प्रथमो महाकाव्यनिर्माता प०चेमधारिसिंहः। महाकाव्ये कवेः स्वारसिकी प्रवृत्तिर्व्यक्तीभवति, सुतरामस्मिन् प० चेमधारिसिंहस्य दार्शनिकप्रज्ञाया. काव्यकौशलस्य प्रतिभायाश्च यो विकासः समजनि तत्समुच्चय विन्यास एवाश्रयति दृग्गोचरताम्।

*महाकाव्यमिदं लक्षणलक्षितम्। लक्षणं हि महाकाव्यस्येत्थं सूत्रितं विश्वनाथपञ्चाननेन—*

सर्गबन्धो महाकाव्यं तत्रैको नायक सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गार-वीर-शान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्वेऽपि रसा सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्।
क्वचिन्निन्दा खलादीना सतां च गुणकीर्त्तनम्॥
एकवृत्तिमयैः पद्यैरवसानेऽन्यवृत्तिकैः।
नातिस्वल्पा नातिदीर्घा. सर्गा अष्टाधिका इह॥
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचन भवेत्॥
सन्ध्या-सूर्येन्दु-रजनी-प्रदोष ध्वान्तवासरा।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः॥
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा॥
नामास्य सर्गोपादेयकथया सर्गनाम तु॥

—साहित्यदर्पणम् ६।३१५—३२५

तत्रास्मिन् महाकाव्ये रमवत्पद्यकदम्बविन्यासरूपः सर्गबन्धः सर्वत्र दृश्यत एव। चैत्रवंशीयः क्षत्रियो धीरोदात्तः सुरथो नाम राजा नायकः। भक्तिप्रष्ठभूमावलम्बित-

## सर्गाणां सारसंग्रहः

सर्गसंख्या—सारांशः

१—मङ्गलाचरणक्रमे देवीस्तुतिः कविवंश-परिचयः, विनयवाक्यानि, कोलापुरनरेशस्य सुरथस्य गुणवर्णनम् ।

२—सुरथमहिष्या मनोरमाया वर्णनं वर्षर्तुवर्णनपुरस्सरं संभोगश्रृङ्गारवर्णनञ्च ।

३—कोलापुरवासिनः समाधिनाम्नो वैश्यस्य तदैश्वर्यचरित्रयोश्च वर्णनं हेमन्तर्तुवर्णनपुरस्सरं वैश्यदम्पत्योः संभोगशृङ्गारवर्णनञ्च ।

४—समाधिपुत्रस्य धनेशस्य जन्माभिजात्यसंस्कारविवाहादिवर्णनं, स्नुषायां समागतायां पत्नीपुत्रस्नुषाभिः समाधेरुपेक्षा, सञ्जनितस्य समाधिमनस्तापस्य विशदं वर्णनम् ।

५—शरद्वर्णनं, सुरथशत्रुबलिकृतदेवीस्तुतिः बलिनः शुभस्वप्नवर्णनञ्च ।

६—बहुभिः संगतस्य बलिनः सुरथेन सह संग्रामः, सुरथस्य पराजयः, पराजितस्य तस्य मनोभावः, वृद्धमन्त्रिद्वारा नगरमानीतस्य राज्यच्युतस्य तस्य प्रजाभिः पत्न्या च पराभवः ।

---

named Samadhi who was in a worse plight also happened to be at the same place. This accursed fellow h d been exiled by his sons who had jointly aggrandized everything belonging to him and had taken up "all" cutting the unlucky old fellow with but showers of tears rolling down his cheek. Inspite of the disasters suffered by him from his sons Vaishya's mind cannot take to detachment and he still suffers in his heart of hearts keen anxieties for the weal of those very unbecoming hostile progenies of his.

Surath and Samadhi now both meet in the forest and perceive through self exposition each other's woes. Perchance they come by the hermitage of one "Medhas" sage, a mystic hermit realising the essences of the universe and its cause. On

सर्गसंख्या—सारांशः

७—शिशिरर्त्तुवर्णनं, सुरथसमाध्योर्दुर्जीवनवर्णनं, तयोः परस्परालापेन समाश्वासनं च।

८—दुःखिनः सुरथस्य गणेशस्तुतिपूर्वकं वनप्रस्थानम्।

९—वने सुरथकृतस्य तपसो वर्णनं वसन्तवर्णनं च।

१०—आर्त्तौ सुरथसमाधी देवान् संस्तोतुमुपक्रमाते। तत्समीप एव स्वाश्रमे वसन् मुनिर्मेधा योगबलेन तयोरार्त्तनादं विज्ञाय तौ स्वसमीपमानाय्य देवीमाहात्म्यमुपवर्णयति।

११—जगदम्बा कथं प्रसन्ना भवतीति सुरथसमाधिभ्यां जिज्ञासितो मेधास्तद्रहस्यं प्रकटयन् पुनर्देवीमाहात्म्यं प्रकाशयति।

---

inquiry the king reveals his woes and hardships to the sage and also the difficulties and paradoxical circumstances of the Vaishya merchant. Both of them are now affiliated to his discipleship and Medhas asks them to take recourse to the devotion and meditation to and upon the Great Premordial mother.

The thirteenth chapter or the last chapter (Adhyay) again takes us back to the main heroes, the king and Vaishya. They follow the advice of the sage and devotedly prostrate upon the feet of the Devee. After a series of sincerely devotional meditation and austerities they find the Devee before them. Three years elapse in the interval; and the book finishes with the conversation between the Devee on one side and the two supplicants on the other. The king on his prayer for glory gets the boon of being born as a Manu direct from the solar region after unsheathing himself from the then body. The Vaishya is perfectly disgusted of the worldly panorama and gets the boon of the true knowledge based on renunciation.

*Madhubani*
*20. 2. 42.*

**K. D. Sinha.**

सर्गसंख्या—सारांशः

१२—निर्विण्णस्य राज्ञः कष्टेन जीवनयापनं, तपस्या—कायिकी मानसी च, मानसार्च्चनं, समाधेस्तपः ; प्रसन्नया भगवत्या वरदानम्। सर्गेऽस्मिन् षोडशोपचारविधिना मानसार्च्चनमतीव वैशिष्ट्यमादधाति।

१३—सुरथवैश्ययोर्मुनिसमीपागमनम्। राज्ञे मुनेर्नीत्युपदेशः।

१४—प्रोषितनायिकाया मनोरमाया विरहवर्णनं, चान्द्रोपालम्भः, स्वप्नः, करुणविप्रलम्भशृङ्गाररसस्य रम्यं वर्णनं च।

१५—मनोरमयाऽनुनीतस्य वृद्धमन्त्रिणो राजान्वेषणाय वनगमनम्। मार्गे राज्ञदर्शनम्। देवीवरदानमवगत्य सैन्यायोजनम्। जगदम्बानुकम्पया बलिनः पराजयः। सुरथस्य राज्यप्राप्तिः। लक्ष्मीवर्णनम्। राज्ञः प्रशंसा। शिशिरे मनोरमासंगतिः।

१६—सायं राजा मनोरमया सह राजधानीमायाति, सन्ध्यावर्णनं, मनोरमा-रूपवर्णनं, सम्भोगवर्णनं च।

१७—राज्ञः प्रत्यावर्त्तनवृत्तान्ते श्रुते वैश्यपरिवारे समाधिकृते महान् शोकः समुदेति। तत्पत्नी-पुत्र-स्नुषाः दुःखमग्ना जायन्ते। श्रुत्वेमं वृत्तान्तं राजा 'समाधिर्ज्ञानं प्राप्य जीवति' इति वार्त्तां वैश्यपरिवाराय प्रेषयति। ततः समाधिपुत्रो धनेशो मातरं पत्नीं च समाश्वास्य वनं प्रयाति।

१८—समाधिपुत्रो वनं प्राप्य पितुश्चरणयोः पतति। पुत्रप्रार्थितः समाधि-र्मुनीनामाज्ञया गृहमागच्छति। लज्जिते पत्नीस्नुषे क्षमां याचयतः। निर्लिप्त. समाधिगृहे वसन्ननासक्तं जीवनं यापयितुमुपक्रमते, जीवन्मुक्तः सन् पद्मपत्रमिवाम्भसेव तिष्ठति।

महाकाव्यमदः कवेरन्तिमा कृतिः। अस्य प्रणयनसमयेऽसौ मनीषी मुक्ता-बिन्दुरोगग्रस्ततयाऽस्तप्रायवीक्षणशक्तिरासीद्‌वो मनसा गुम्फितवान् श्लोकान् समीपस्थितैः पुत्रादिभिः संरुग्णानिःस्नावैर्लेखयति स्म। पौर्वापर्यादिविवेचन-संशोधन-परिवर्त्त-नादि-निबन्धकृत्यसन्दोहं चक्षुरिन्द्रियशैथिल्यतयाऽसमापयित्वैवासौ दिवंगतः। यथा-स्थितोपलब्धमेवेदमुपस्थापयामि कवेर्गूढदार्शनिकभावसम्भिन्नकाव्यीयरसानुभूतये सविधे तत्त्वविदां रसज्ञानाम्।

यथोक्तमुपरिष्टादस्य विदुषो जीवनमुपासनायां दार्शनिकसिद्धान्तमनने चैव व्यतीतमतोऽस्य कृतिरपि पौराणपद्धत्या स्तुतिबहुला दार्शनिकसिद्धान्तसमन्वयप्रचुरा च। पुरोदीरितविषयप्रतिपत्तये महाकाव्यस्यास्य कतिपयानि विशिष्टानि पद्यानि दिङ्मात्रं नीचैरुद्ध्रियन्ते—

( क ) ग्रन्थारम्भे 'आदौ नमस्क्रिये'ति कर्त्तव्यतया स्वाभिमतशैवसिद्धान्तानुकूला शक्तिस्तुतिः—

आद्या येयं भवानी प्रभवति भुवनव्यूहभावप्रकाशा
माया-विक्षेपसिद्धावरणकृतिरता चक्रकेलिप्रसन्ना।
भक्त्या क्रीता तथेयं नृपतिबलचयैर्दास्यति प्रीतिसिद्धा
नित्यानित्यप्रपञ्चैरविरतमिह नो वेदवर्गांश्च साऽव्यात्॥

( ख ) प्रावृड्वर्णनक्रमे शिवस्तुतिः—

कैलासाभ्रैः प्रमुदितमनाः शङ्करो नीलकण्ठो
मत्कायावैद्युतविषरसः शम्भुरत्यन्तधीरः।
पीयूषेशैरपि च सकलैः प्रार्थितः स्नापितो यो
सोऽयं गौरीपतिरविरतं चित्तशान्तिं करोतु॥—२।४३

( ग ) शरद्वर्णनक्रमे देवीस्तुतिः—

शरत्प्रभा या च विभाति लोके
चित्तेऽथवा सैव कला विविक्ता।
सर्वं त्वमेवेह जगत्प्रसादो
यस्मिन् सुखं वापि परापि शान्तिः॥

निर्वाहशक्तिर्भुवि मे त्वमेव
गार्हस्थ्यलोकाश्रयमूर्त्तिरेवम्।
सौभाग्यभाग्योदयशक्तिरूपा
सातत्यनिष्ठो हृदयप्रदीपः॥—५।११, १२

( घ ) मेधो मुनेरुपदेशक्रमे दार्शनिकसिद्धान्तविवेचनम्—

वेदान्ततत्त्वं विबुधैः सदैव प्रतिष्ठितैः सा कथिता च शास्त्रे ।
सांख्येषु शक्ति प्रकृतिर्विचित्रा चैतन्यहीना कथिता मुनीन्द्रः ॥
शक्तिश्च विष्णोर्हरेव साक्षाद् भेदो न कश्चिद्धि तयोः कदापि ।
ज्वालापि वह्नेर्नहि वह्निभिन्ना यथा तथैव प्रतिभाति शक्तिः ॥
१०।३९, ४०

अभेदभावेन शिवं विभिन्नं येषित्तु जीवं शिवतत्त्वमंशम् ।
वदन्ति चैतन्यमितं शरीरे भिन्नानि शास्त्राणि विभान्ति लोके ॥
इयं तु तावच्छिवदर्शनाना मति कथंचित्कथिता मया ते ।
पुराणवर्गेषु च 'नामरूपे' मूलं स्वरूप कथित विचित्रम् ।
१०।४६, ४७

## रसानां वर्णनम्

( १ ) सम्भोगशृङ्गारस्य—

दृढतमपरिरम्भैर्भावभव्यैरधीरा विविधविधिरतीशप्रक्रियाभिर्विचित्तम् ।
कथमपि हि विचित्रा हावभावप्रभावैर्ज्वलयति मदनाग्नि मध्यरात्रे पुनःसा ॥
३।४०

( २ ) विप्रलम्भशृङ्गारस्य—

साऽहं स्वभावात् प्रणिधानभावा तमेव लोकं रविमण्डलं तम् ।
यास्यामि यस्मिन्निजकर्मबन्धाद् गतः पतिर्मे तपसः प्रभावात ।
१४।५

( ३ ) वीररस्य—

यज्जृम्भणास्त्रं सहसैव लब्धं लोकप्रसिद्ध सुरथेन भक्त्या ।
मुनेः कृपायास्तदिहापि दृश्यं सैन्येषु मध्ये निजतेजसा वा ॥—१५।२६

( ४ ) करुणस्य—

पुत्रेण किं मे स्नुषया तथा वा पौत्रेण किं वा मम वंशवृद्धया ।
नवीनवैधव्यगतं च दुःख केनापि नैव प्रतिहन्यते तत् ॥—१७।४

( ५ ) हास्यस्य—

विशालनागेन सुरेभ गच्छन् प्रियां सुपर्णी मनसा स्मरश्च ।
सिक्त. पयोभिर्विकलो युवान्लो यदत्यहो यानमदो न सुष्टु ॥—२।१८

( ६ ) रौद्रस्य—

दावानलत्वं गत एव वह्निः संवर्द्धितो मोघनिदाघकाले ।
अन्तर्बहिस्तत्त्वविशेषरूपः पुनः समावेद्ह्य'दयं प्रविष्टः ॥—४।३८

( ७ ) अद्‌भुतस्य—

दत्त्वा वरौंश्च जननी भवभावगम्या
श्यामाभ्ररूपललिता लसिता कृपाभिः ।
प्रारब्धकिल्विषतृणं नयनानलेन
दग्ध्वा गता नयनयोर्विलयं तयो सा ॥—१२।५४

( ८ ) भयानकस्य—

तद्रक्तबिन्दुः पतितो हि भूमावुत्पादयन् सोऽपि समानशक्तीः ।
अशेषसंख्याभिरथासुराणामाच्छादयत्यैव भुवं विचित्राः ॥—११।१०

( ६ ) बीभत्सस्य—

अष्टाभिरेषा निजघान काली, तं रक्तबीजं किल शक्तिभिः सा ।
स्वयं तु पर्णोपमजिह्वयैव लिलेह बिन्दून् प्रसनप्रवृत्ता ॥—११।१६

(१०) शान्तस्य—

सेयं वैश्यं वणिजममलं प्रत्यहं रक्षतीशा
मुक्तिं चास्मै दिशति परमं ज्ञानविज्ञानजाताम् ।
जीवन्मुक्तिं मुनिवरकुलैः प्रार्थितां वा सुबोधा-
मानन्दं वा गृहपतिगतं सा प्रदत्ते कलाभिः ॥—१८।४१

(११) वात्सल्यस्य—

शिशुमुखमविलोलं वीक्ष्य हृद्‌भावनाभि—
र्निजमनसि स धीरो बाष्पवेगावरुद्धः ।

सद्यर्जनितविबोधाद् भक्तितम्रो धनेशः
क्षणमिह करयुग्मं सोऽपि धत्तेऽतिबद्धम् ॥—१७।४१

## ऋतूणां वर्णनम्

( १ ) वसन्तस्य—

पुँस्कोकिलोऽयं हि रसालमञ्जरीं भुक्त्वा निकूजत्यतिशोणदृष्टिः ।
स कामदूतः प्रमदाजनानां हन्ताथवाऽयं विरहानलत्वात् ॥—९।२६

( २ ) ग्रीष्मस्य—

दावानलत्वं गत एव वह्निः संवर्द्धितो भीषणनिदाघकाले ।
अन्तर्बहिस्तत्त्वविशेषरूपः पुनः समाधेहृदयं प्रविष्टः ॥—४।३८

( ३ ) प्रावृषः—

तयोर्विलासः प्रविवर्द्धमानः कादम्बिनीदर्शनकौतुकेन ।
इन्द्रोऽपि साचिव्यमिवास्य कुर्वन् पीयूषधारा प्रतिवर्षति स्म ॥—२।५

( ४ ) शरदः—

कमलकुसुमकाशैश्चन्द्रशुभ्रांशुभिस्तैः
सितकलकलहंसैर्मालतीपुष्पहासैः ।
विविधकुसुमभारक्लान्तवल्लीप्रभाभि—
र्नवशरदि वनश्रीर्व्यज्यते पुण्यभूमौ ॥—५।४०

( ५ ) हेमन्तस्य—

तुषारसञ्जीकृतशाद्वलं च मुक्तासुसञ्जीकृतमिन्द्रनीलम् ।
रवेः करामर्शमृदुशीतलं तद्धेमन्तराजस्य च भूमिशैली ॥—३।१६

(६) शिशिरस्य—

धनेन हीनोऽपि नरश्च शीते पलालसञ्जीकृतशय्यिकायाम् ।
निशां नयत्येव सह स्वपत्न्या सुखं समालिङ्गितविग्रहः सन् ॥—७।२५

## प्रकृति वर्णनम्

( १ ) सन्ध्यायाः—

दिव्याङ्गरागा सुरमाधजाना दोर्दण्डमार्त्तण्डकलाप्रभाभिः ।
मृद्वी च चन्द्रप्रभया प्रकामं कामायमानेव समीपमेति ॥—१६।२

# सुरथचरितमहाकाव्यस्य सर्गानुक्रमणिका





( २ ) सूर्यस्य—

उदीयमानाऽपि रविः कलाभिः स लोकमित्रं प्रियमेव मित्रः ।
लोकोपकाराश्च सदैव सन्तो भवन्ति बाला अपि ते प्रभाभिः ॥—७।१०

( ३ ) चन्द्रस्य—

उडुपतिरिह शुभ्रो ह्ययमौरैर्मयूखै-
श्चरयति जलदौघान् दिक्षु कौर्त्तिप्रभावात् ।
क्वचिदसितविवर्णा चेद्विभातीह ह्यो ।
वियति जलदमाला सैष शारदभावः ॥

( ४ ) रजन्याः—

केचित्तपोभिश्च निशा नयन्ति केचित्सुविद्याभ्यसनप्रयासैः ।
अन्ये धनेशाः सुरतैश्च मद्यैर्ज्ञाता त्रियामा भुविचैकयामा ॥—१।२८

प्रदीप—ध्वान्त-वासरादीनां वर्णनानि यथास्थानमायातानि, विस्तरभियाऽ-त्रोदाहरणानि नोपन्यस्तानि तेषां, तान्यपि पाठकाना स्वयमेव दृशमञ्चयिष्यन्ति; एवमेव-ध्वनि-गुण रीत्यलङ्कारादोनामपि निदर्शनानि ।

कृतिरियं न कविताभिरैहिकामुष्मिकसाध्यसिसाधियो॰र्व्यवसायिकवेर्नवाऽऽ-शैशवादभ्यस्तसंस्कृतवाङ्मयस्य, किन्तु सर्वदैवोपासनालीनस्याबाल्यादभ्यस्तपाश्चात्य-भारतीकस्य । सुतरामस्मिन् महाकाव्ये कालिदास-माघ-भारवि-श्रीहर्षादिमहाकविकृत-महाकाव्यगतं चतुरस्रं वैशिष्ट्यं दुर्लभमेव । कृतेरमुष्याः कवि कौलिकसंस्कारवशात् सहृदयसुरसरस्वतीसेवकसुधीसमुदायसाहचर्याच्च संस्कृतसाहित्यरसिकतामानर्ज । तथा-ऽप्यसौ स्वान्तः सुखाय महाकाव्यप्रणयनसाहसमकरोत्, पुरोदीरितरीत्या लक्षणाञ्चित-तस्य महाकाव्यस्य गुम्फने सफलता चाप्नोदस्मिन्नपि संस्कृतह्रासयुगे विंशतितमस्य खृष्टा-ब्दशताब्दस्योत्तरार्द्धभागे—इति वैशिष्ट्यशिरोरत्नमस्येत्यलम् ।

सरिसब-पाही
दरभंगा
रम्भा तृतीया
२०२४ वि स

विदुषां विधेय
श्रीतेजनाथझाः

# सुरथचरितमहाकाव्यस्य सर्गानुक्रमणिका





# प्रकाशकीयम्

पितृचरणेपूपरतेषु तत्सेवा तत्स्मृतिरक्षणात्मिकैवावशिष्टा समक्षमावयोस्तत्र प्रयतमानावावां नितरामात्मतुष्टिमनुभवावो विलोक्य महाकाव्यमदो मुद्रितं सत् प्रकाशनाय प्रस्तुतम्। सर्वप्रथममत्र धन्यवादार्हो भारतीय केन्द्रियशासनस्य शिक्षा-मन्त्रालयो यस्य,द्रव्यसाहाय्यसौजन्येन जातमिदं मुद्रापितम्। अवसरेऽस्मिन् स्वर्गीयो महामहोपाध्यायो डाक्टर उमेशमिश्रोऽवतरति स्मृतिपथं, यस्य प्रोत्साहनमार्गदर्शना-भ्यामेवेदं जायते प्रकाशितं, येन चामुखलेखनेनामुष्य महत्त्वमुपबृंहितम्। तस्य शान्तायात्मनेऽपि हार्दिकं श्रद्धाञ्जलिं समर्पयावः। सम्पादकायास्याऽस्मीयायापि पण्डित श्रीतेजनाथ(झा)शर्मणे कृतज्ञतां ज्ञापयावो येनास्मत्स्नेहानुरोधेन प्रतिकूलास्वपि परिस्थितिषु पुस्तकमदः सम्पादितमस्ति। दरभङ्गास्थराजप्रेसकम्पनी( प्राइवेट )-लिमिटेडसंस्थाऽधिकारिणः कर्मचारिणश्चापि सर्वथा साधुवादार्हा यैः सपरिश्रमं साधु मुद्रितमिदम्। यथाप्रस्तुतमिदं सहृदयसुधीसमक्षमुपस्थापयावः पितृचरण-स्मृतिकुसुमं, त्रुटीनां कृते क्षमापयावश्च।

विद्वदाश्रवौ

**श्रीबुद्धिधारिसिंहः**

**श्रीजयधारिसिंहः**

* श्री १०८ दुर्गादेव्यै नमः *

# अथ सुरथ-चरितं महाकाव्यम्

## प्रथमः सर्गः

आद्या येयं भवानी प्रभवति भुवनव्यूहभारप्रकाशा
मायाविक्षेपसिद्धाऽऽरयकृतिरता चक्रकेलिप्रसन्ना ।
भक्त्या क्रीता तथेयं नृपति वलयैर्दीव्यति प्रीतिसिद्धा
नित्यानित्यप्रपञ्चैरविरतमिह नो वेदवर्गाश्च साऽव्यात् ॥१॥

सिद्धाश्रमेषु प्रतिसेविता या
करोति कार्यं विविधं विचित्रा ।
प्रकृत्यभेदाचरणा च लोके
सत्कल्पनाभिस्तु बहिर्विभातु ॥२॥

ऋतवो विभवैश्च विभान्ति यया
समया विषयाश्च तथा भुवने ।
प्रकृतिः परमा ललिता विजया
हृदि सा सततं वसतु प्रभया ॥३॥

या सत्कवीनां विभवेषु रम्या
रम्या तथा राजसमृद्धिभिश्च ।
रम्या पुनर्या व्यसनप्रपञ्चैः
सेयं कलाऽस्मान् सफलान् सदाऽव्यात् ॥४॥

येयं कामगवी नित्या वेदवर्गप्रसूः शुभा ।
भावनावाटिकायां सा चरन्ती नः सदाऽवतु ॥५॥

चिच्छक्तिप्रेरितान्तःस्थो माहेशतनयात्मजः ।
कीर्त्तिजातगिरीशान्तस्तच्छ्रीश्रीकरलोलुपः ॥६॥

देवो हर्षोद्भवः कश्चित् क्षेमाद्वैतमना मुदा ।
देव्याः प्रसादमत्युग्रं प्रकाशयितुमिच्छति ॥७॥*

( युग्मकम् )

देवीमाहात्म्यमत्युच्चैः किञ्चिदिच्छति मन्दधीः ।
मादृक् स्वल्पप्रबोधोऽपि प्रकाशयितुमुत्तमम् ॥८॥

मोहादिभिर्दुराराध्या स्वाराध्या भक्तिभिस्तथा ।
येयं विश्वस्वरूपा, किं तस्या माहात्म्यभावना ? ॥९॥

कीदृशा मानवासाध्या सा सौभाग्यप्रबोधिका ?
मानवाधमवर्गैश्च बोधसाध्या कथं नु सा ? ॥१०॥

अथवा मम सैवेह स्मृतिर्विद्या विभा परा ।
सन्नोदयति बुद्धिं च देवीमाहात्म्यकीर्त्तने ॥११॥

व्यापिका यदि संकीर्णां बुद्धिं प्रेरयति स्वयम् ।
किमाश्चर्यं भवेत्तस्मान्मूढानां काव्यकौतुके ॥१२॥

---

* महामहोपाध्याय-महाराज-मिथिलेश-महेशठक्कुरकुलोत्पन्नो महाराजकुमार कीर्तिसिंहस्य प्रपौत्रो गिरिधारीसिंहस्य पौत्रो हर्षधारिसिंहस्य पुत्रः श्रीकरापरनामधेयः श्रीक्षेमधारिसिंहो वेदान्तविनोदो महाकाव्यस्यास्य कवयितेति सूचितम् ।

काचित् पिपीलिका चन्द्रं यातु जातु लघीयसी ।
पद्भ्यां वा यदि तस्यास्तु भवेद् दृक् करुणामयी ॥१३॥

बहुना किमिहोक्तेन परा विद्या च या शिवा ।
मत्तः सैवेह गृह्णाति स्वीयं माहात्म्यमुत्तमम् ॥१४॥

सुरथे दिव्यभूपे च समाधौ वैश्यपुङ्गवे ।
कृपां यथा कृतवती सा तथा परिलिख्यते ॥१५॥

भोगमोक्षौ करात्तस्याः कथं लभ्यावुपासनात् ।
चतुर्वर्गः कथं लभ्यस्तत्कृपालवतोऽथवा ॥१६॥

× × × ×

राजर्षिः सुरथो राजा चक्रवर्त्ती च भाग्यवान् ।
स्वारोचिषे मनौ जातो द्वितीये सत्कुलोद्भवः ॥१७॥

चैत्रवंशप्रदीपश्च प्रजाकल्पद्रुमस्तथा ।
कोलापुरसुमेरुश्च लोकयात्रा सुतीर्थवान् ॥१८॥

विद्यानदी न दीनश्च कल्याणगुणवान् स्वयम् ।
पृथ्वीवधूवरः श्रीमान् मर्यादामेखलाप्रियः ॥१९॥

नीतितोयधरः साधुः सत्यधर्मरतो दृढः ।
देशकालविभागज्ञः कीर्त्तितो भुवनत्रये ॥२०॥

निग्रहानुग्रहे दक्षो धर्मासनपदस्थितः ।
दावानलो रिपूणां च लोलालौल्यहरो विभुः ॥२१॥

सुहृच्चकोरचन्द्रश्च नायिकावल्लभो रतः।
नायिकाधिपतिः शुद्धः सज्जनानन्दवर्द्धनः ॥२२॥

स सुवर्णच्छविर्धीमान् सदानन्देन मण्डितः।
त्रिवर्गप्रीतिमान्यश्च लोकान्तःस्थो वशी समः ॥२३॥

सिद्धाश्रमविधिज्ञश्च रक्षाधर्मगुरुः स्वयम्।
ज्ञानविज्ञानतीर्थेषु स्नातको रतिरीतिमान् ।२४॥

विपत्तृणानलः श्रीशः श्रीकराणां सुरक्षिता।
अज्ञातभाग्यदोषश्च प्रबलः शुभजो भवः ॥२५॥

कर्णस्पर्द्धी प्रदाने च कलाना द्रुतशिक्षकः।
यज्ञकर्मक्रियादक्षस्तत्फलानां च सिन्धुराट् ॥२६॥

क्रोधेऽग्निसदृशो वीरः क्षमया पृथिवीसमः।
तपोबलं क्वचित्तस्य देवाराधनजं तथा ॥२७॥

व्रतक्रियाबल वापि क्वचित् तीर्थप्रसेवनम्।
हठयोगबल तस्य क्वचित् त्यागबल तथा ॥२८॥

निरामयाः प्रजास्तस्य स्व-स्वधर्मेषु निष्ठिताः।
दीर्घायुष्ट्वं प्रभुञ्जानाः क्लेशराज्यबहिष्कृताः ॥२९॥

कनिष्ठमरणं नैव क्वचिद् राज्येऽस्य केनचित्।
हेतुना वापि नैवासन् शोकदुःखभयादयः ॥३०॥

ध्यानेनास्यैव स्वान् कान्तान् साक्षात्कुर्वन्ति नायिकाः।
कामनाथविभिन्नान्ता मानिन्यो रहसि स्थिताः ॥३१॥

अस्य शक्त्या प्रमाताश्च मल्ला युद्धप्रनिन्दकाः ।
व्यसनेषु च दोषान् स सदा पश्यति नीतिमान् ॥३२॥

सर्वान् सुरान् समं पश्यन् राजते मनसा धिया ।
विधिं शिवं हरिं वापि देवीं शक्तिं रविं तथा ॥३३॥

नो द्वैतभावना तस्य चित्ते क्वापि प्रबोधजा ।
संसारे वा विरक्तिः सा यस्यामद्वैतभावना ॥३४॥

अकामं कुरुते कर्म विपाकनाशनाय वा ।
कर्मणां कृतपूर्वाणां मतिमान् सुरथः स्वयम् ॥३५॥

न कोऽपि गुरुरस्यासीद् यस्मात्सद्रक्षणं भवेत् ।
यस्मादुद्धृतिर्वा चिन्तायां विपत्तौ वा कथञ्चन ॥३६॥

कस्मिन् वापि महत्तत्त्वे संसक्तं नापि तन्मनः ।
सूक्ष्मदर्शनवृत्तिर्वा न वास्य मनसि क्वचित् ॥३७॥

प्रकृतिः पुरुषो वापि ब्रह्मतत्त्वमथापि वा ।
न किञ्चिद् निश्चयीजश्च तन्मते बुद्धिजं विभु ॥३८॥

ज्ञानमद्वैतरूपं नो तस्यासीत्कर्मवासिते ।
क्रियादर्पान्विते चित्ते भक्तिर्वा विनयान्विता ॥३९॥

निष्कामकर्मभिस्तस्य चित्तमासीत् प्रफुल्लितम् ।
प्रारब्धस्य च नो शक्तिं वेत्त्यसौ कालचोदिताम् ॥४०॥

प्रायश्चित्तक्रियाभिर्वा भक्त्या वापि च भूभृतः ।
प्रारब्धकर्मणां नाशः स्यात्तथापि क्वचित्क्वचित् ॥४१॥

निष्कामकर्मणा सिद्धिः प्रारब्धावरणं विना ।
जायते च क्वचिल्लोके भक्त्या वापि क्वचिच्छुमा ॥४२॥

मायां न वेत्ति विविधाकृतिभिर्विचित्राम्
शक्तिं शिवं नु भवपं विधिमेव सद्यः ।
चित्तप्रणोदनकरी नहि वापि भक्ति-
श्चित्ते न किञ्चिदपि तस्य परं न चिद्वा ॥४३॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
सुरथपरिचयो नाम प्रथमः सर्गः ॥



## द्वितीयः सर्गः

तस्य प्रिया च पृथिवी सदृशी सुराज्ञी
तस्मिन् मुदा रतिरते फलिते लते ते ।
कल्पाश्रिते कुसुमिते रमणप्रिये च
कर्मार्जिते प्रतिदिनं सुखदेऽथ भव्ये ॥१॥

मनोरमा सा सुरथस्य पत्नी
धरेव साक्षाद् रतिदा च नित्यम् ।
सापत्न्यभावं सहसैव हित्वाऽऽ-
सक्ता च तस्मिन् पतिभावनिष्ठा ॥२॥

कल्पाश्रिते ते रतिदे लते द्वे
प्रचक्रतुर्भर्तृवर-प्रसादम् ।
समे समे रत्नफलप्रभावे
तस्मिन्न[1]गत्वं च सदानुजातम् ॥३॥

कर्मार्जिते ते सततं च तस्य
प्रिये सुभावैर्ददतुर्विलासम् ।
तस्माद्धरा तोयधराद् यथैव
सुपोषिते ते शुभदे तथैव ॥४॥

तयोर्विलासः प्रतिवर्द्धमानः
कादम्बिनीदर्शनकौतुकेन ।

---

१. न गच्छतीति, अगस्तस्यभावस्तत्त्वम् ।

इन्द्रोऽपि साचिव्यमिवास्य कुर्वन्
पीयूषधारां प्रतिवर्षति स्म ॥५॥

सद्धुत्तमर्णाय यथाधमर्णः
प्रदित्सुरेव स्वयमेव देयम् ।
प्रारब्धकर्माथ तथैव राज्ञे
भोग्यं परं दित्सति चापि दत्ते ॥६॥

अतः पयोदं सुघनं च दृष्ट्वा
महान्ति भुञ्जन् स सुखानि भूपः ।
सा चापि रम्या प्रकृतिर्विभूत्या
मातेव बालं प्रतिमोदयन्ती ॥७॥

किमिन्द्रनीले च सुवारिरत्ने
मुक्ताः सुपङ्क्ताः सितपत्रबद्धाः ।
समोडुवर्णाः शिवसूत्रबद्धाः
शस्यध्वजा वा प्रतिभान्ति दत्ताः ॥८॥

किं वा महेशस्य कलेवरे च
विभूतियुक्ते सुविभूतिदेऽपि ।
मुक्ता विमुक्ता इव भान्ति युक्ता
भोगप्रलुब्धाः शिवभक्तिनिष्ठाः ॥९॥

किं वापि कालागुरुधूमपत्रे
श्रीखण्डदण्डावलिरेव दूरे ।
सुकेतकी पंक्तिरियं विविक्ता
तस्मिन् सुपत्रे निहताऽथवा किम् ॥१०॥

कथं कथंचिज्झटिति प्रकृष्टं
गत्यैव हृदयं प्रियमेति गूढम् ॥१६॥

काश्चित् सुतन्त्रीलयभावमग्ना
गायन्ति नार्यश्च पतिप्रबन्धम् ।
अन्याः प्रमोदं प्रवहन्ति विज्ञा-
स्तदीयनामान्तरितैश्च गीतैः ॥१७॥

विशालनागेन सुखेन गच्छन्
प्रियां सुपत्नीं मनसा स्मरंश्च ।
सिक्तः पयोभिर्विकलो युवान्तो
यदत्यहो यानमदो न सुष्ठु ॥१८॥

करं सुनागस्य च नागरूपं
मत्वा मयूरः क्वचिदेति मूर्द्धिन ।
उद्धूय पुच्छं नदति प्रविष्टः
केका विशेषां च ददाति शोभाम् ॥१९॥

काश्चित् सकामाः समदाः सगूढ
धामाभिरामा रमणप्रलुब्धाः ।
रम्या अशक्ता गृहसारिकास्ताः
स्थिताः सुहर्म्ये सुरथानुरोधात् ॥२०॥

तद्दिग्निभास्ताः श्वसनप्रतप्ता-
स्तस्मिन् चक्षुर्ददति प्रकामम् ।

मोक्तुं न हातुं स्वपति सुरत्नं
मोग्याश्च योग्या रहसि स्वभाग्यात् ॥२१॥

प्रौढाः कदम्बा वनिताननानां
रम्याः सुरम्याः पयसापि नैव ।
प्रियाननालोकनलुब्धचित्ताः
स्वकीयरोमाञ्चितभावभव्याः ॥२२॥

उड्डीयमानैश्च बकैः सुयुक्तं
वियद्वितानं सहसा विलोक्य ।
काश्चित्सुरम्याः पतिभिः सहापि
कर्त्तव्यमूढाः प्रतिभान्ति दिव्याः ॥२३॥

झञ्झाप्रवातैविकलीभवन्ति
केचित्तु कार्यार्थपराः सुनिज्ञाः ।
कर्त्तुं न त्यक्तुं प्रभवन्ति यूनो-
र्भोगानिव क्षीणवलाः प्रियाणाम् ॥२४॥

अम्भोदनादं तमसातिघोरं
श्रुत्वा च काचिद् वनिताऽधिगेहम् ।
ससम्भ्रमं सम्मिलदीक्षणा स्वं
पतिं समालिङ्गति वेपमाना ॥२५॥

काचित्तु काम्या सुरतप्रशान्ता
पत्युः सदङ्के समदा शयाना ।
रतिश्रमोद्भूतनिदाघमुच्चै-
रासारपाताय पुनः स्पृहाल्टः ॥२६॥

नगाङ्गनाङ्कात् पतिताः सुनद्यः
समुद्रपत्न्यो जलसन्निपाते ।
अप्राप्य सिन्धुं सहसा पतन्ति
सस्वेदकामज्वरमुद्वहन्त्य' ॥२७॥

भीडा द्विजानां यदि वा कदाचित्
स्याच्चेच्च सुप्ता विहगाँश्च दृष्ट्वा ।
उड्डीयमानान् वियति प्रबुद्धान्
क्रियापरत्वं शिथिलं च कुर्युः ॥२८॥

मेघेन चन्द्रो विकलो कृतोऽयं
तस्मादसावप्यति कृष्णवर्णः ।
अतो न दातुं नहि चापि मोक्तुं
पानीयमित्थं कुलिशप्रहारी ॥२९॥

तेजोद्वयं यद् युगपत् स्वकोष्ठे
संभवितं तद् दुरितं हि घोरम् ।
पापं तदेवामृतदानसारैः
प्रक्षाल्यते शास्य निवर्द्धकैश्च ॥३०॥

जलं समाकृष्य जलाशयेभ्यो
मेघा विचित्रा प्रपिबन्ति पुष्टाः ।
तदेव तैर्यामृतमम्बुकाले
प्रवर्ष्यते ते च भवन्ति तुष्टाः ॥३१॥

सुशीतलुब्धाश्च विशालनागा
गन्धा वहिस्ते निजगह्वरेभ्यः ।
ताम्बूलभूमिं सन्निपाः प्रयान्त-
स्तां नागवल्लीं चरितार्थयन्ति ॥३२॥

माञ्जिष्ठिकं वापि सुपाण्डुरं खे
मेघं सुमद्रं मृदुलं विलोक्य ।
क्वचित् सुवृष्टिं क्वचिदप्यवृष्टिं
कृषीवलाश्चापि विचारयन्ति ॥३३॥

भूमिं समन्तात् प्रविलोक्य धीरा
ह्याप्लाविताः चापि सुरुचिताः ताम् ।
निर्णेतुमस्याः नहि ते समर्थाः
शुभा सुवृष्टिर्यदि वाप्यवृष्टिः ॥३४॥

क्वचित् सितो वाप्यसितः पयोदः
क्वचिच्च धूम्रो मृदुलः सुपीतः ।
मनोभवः केलिनिदेशा भूमौ
यूनां विनोदं प्रियमातनोति ॥३५॥

बाला निबद्धा गृहपिञ्जरेषु
पतिं युवानं रहसि प्रियं स्वम् ।
भावोद्भवेनापि वयः प्रबन्धात्
त्यक्तुं न भोक्तुं परिशक्यते हा ! ॥३६॥

कार्येषु दक्षा अपि भृत्यवर्गा
विलोक्य मेघांश्च विविक्तवर्णान् ।
अनेकसौकर्यपृथक्कृतास्ते
पत्युर्निदेशं नहि पालयन्ति ॥३७॥

विशालवक्षोजभरानता याः
स्नातुं गता पुष्करिणीतटेषु ।
आसारसेकावलिमोदिता सा
धत्ते च कामोद्गतरोमराजीः ॥३८॥

स्नेहानुलिप्तैश्च कचैः सपुष्पैः
पुष्पासवेनापि सुपद्मिनीनाम् ।
ताम्बूलपूर्णाननजातगन्धै-
रुत्पद्यते कामिजने विकारः ॥३९॥

पवित्रतामूलमिदं पयस्तत्
सन्तर्पणं जीववतां तथा तत् ।
संवर्द्धितं चाब्जवनं विधूय
धत्ते न लज्जाकणिकामथापि ॥४०॥

आकृष्य नद्याश्च पयांसि मेघा
स्तान्येव वर्षन्ति नगेषु तापे ।
अचेतनानामपि कीर्त्तिरेषा
धिङ्मानवांस्तांश्च कृतघ्नवर्य्यान् ॥४१॥

नागा विशाला विवृताननत्वा-
ज्जलानि वातं च समं पिबन्ति ।
विषस्य नाशो नहि तेन जातः
सुपोषणेनापि दृढास्तु दुष्टाः ॥४२॥

कैलाशाभ्रैः प्रमुदितमनाः शङ्करो नीलकण्ठो
झञ्झावातैर्हृतविषरसः शम्भुरत्यन्तधीरः ।
पीयूषेरैरपि च सकलैः प्रार्थितः स्नापितो यो
सोऽयं गौरीपतिरविरतं चित्तशान्तिं करोतु ॥४३॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते
प्रावृट्सम्भोगो नाम द्वितीयः सर्गः ।

कार्येषु दक्षा अपि भृत्यवर्गा
विलोक्य मेघांश्च विविक्तवर्णान् ।
अनेकसौकर्यपृथक्कृतास्ते
पत्युर्निदेशं नहि पालयन्ति ॥३७॥

विशालवक्षोजभरानता याः
स्नातुं गता पुष्करिणीतटेषु ।
आसारसेकावलिमोदिता सा
धत्ते च कामोद्गतरोमराजीः ॥३८॥

स्नेहानुलिप्तैश्च कचैः सपुष्पैः
पुष्पासवेनापि सुपद्मिनीनाम् ।
ताम्बूलपूर्णाननजातगन्धै-
रुत्पद्यते कामिजने विकारः ॥३९॥

पवित्रतामूलमिदं पयस्तत्
सन्तर्पणं जीववतां तथा तत् ।
संवर्द्धितं चाञ्जनं विधूय
धत्ते न लज्जाकणिकामथापि ॥४०॥

आकृष्य नद्याश्च पयांसि मेघा
स्तान्येव वर्षन्ति नगेषु तापे ।
अचेतनानामपि कीर्त्तिरेषा
धिङ्मानवाँस्तांश्च कृतघ्नवर्य्यान् ॥४१॥

नागा विशाला विवृताननत्वा-
ज्जलानि वातं च समं पिबन्ति ।
विषस्य नाशो नहि तेन जातः
सुपोषणेनापि दृढास्तु दुष्टाः ॥४२॥

कैलाशाग्रैः प्रमुदितमनाः शङ्करो नीलकण्ठो
झञ्झावातैर्हृतविषरसः शम्भुरत्यन्तधीरः ।
पीयूषैरपि च सकलैः प्रार्थितः स्नापितो यो
सोऽयं गौरीपतिरविरतं चित्तशान्तिं करोतु ॥४३॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते
प्रावृट्सम्भोगो नाम द्वितीयः सर्गः ।

## तृतीयः सर्गः

काले च तस्मिन्नगरे स वैश्यः
समाधिनामा मुदितोऽर्थनाथः।
आसीत् सुधर्म्माचरणेन शुद्धः
श्रियः प्रियः पुत्र इव प्रभावात् ॥१॥

प्रिया च तस्य प्रियभावहृद्या
स्वकीयकर्त्तव्य परायणापि।
पतिव्रता रूपलता गुणाढ्या
श्रिया प्रदत्तेव विभाति रम्या ॥२॥

धर्म्मो न तस्य प्रतिबाधते तं
कामार्च्चनायां विभवप्रतिष्ठः।
त्रिवर्गनिष्ठश्च मुदा सदैवं
कर्त्तव्यभावं मनसा बिभर्त्ति ॥३॥

अहर्निशं स प्रतनोति वृत्तिं
दृढां स्वकीयां मनसा प्रपन्नः।
लक्ष्मीः सदैवाचरिते प्रमोदं
धर्म्मार्जितेव क्षयभावनिष्ठा ॥४॥

लक्ष्मीश्च पत्नी सहधर्म्मनिष्ठा
श्रियं सदैव प्रतनोति हृद्यां
द्रव्येशभावं च शुभं दधानं
भावप्रबोधं कुरुतेऽप्ययुग्मम् ॥५॥

अन्तर्बहिर्मोदमितो दधानः
　श्रिया अपूर्णा विभवैस्तथैव।
तुच्छं यथैवं प्रतिभाति लोके
　ब्रह्मैव हृद्य यदि वाप्यदृश्यम् ॥६॥

मायाविभिन्नं जगतीह सर्वं
　गुणत्रयं ब्रह्मगतं यथैव।
श्रिया विभिन्नं भुवने तथैव
　धनाश्रितं भोगगतं परं वा ॥७॥

मायेव साक्षात् प्रतनोति भोगं
　क्षणं क्षणं तत्परतां दधाना।
सत्त्वं तमो वा रज एव तस्यां
　विभाति भिन्नं सकलं तथा वा ॥८॥

विभिन्न वर्णैश्च यथैव माया
　गुणस्वरूपैः प्रतियाति जीवम्।
तथैव लक्ष्मीनिज साधनेन
　भोक्तारमीशं प्रतियाति लोके ॥९॥

त्यक्त्वा च लौल्यं सहसैव लक्ष्मी-
　र्बभार नित्यं वाणिजं समाधिम्।
आराध्यमानाथ प्रतीक्षमाणा
　प्रारब्धमेव प्रतिकर्मजातम् ॥१०॥

लौन्यं विहायैव मुदं तु लोला
समाधिपत्न्यां प्रतनोति शुद्धाम् ।
अतो न काश्चिन्निशि वारवध्वः
प्रयान्ति गेहे रतिदा विवेशाः ॥११॥

लौन्यं श्रियस्तद् विगतं तु तासु
विविक्तमात्रासु समाधि गेहात् ।
अतः स्थिरत्वं च समाधिपत्न्या
स्थितं तथा केशवधर्मपत्न्याम् ॥१२॥

तत्पुत्रजन्मावधिरेव धर्म—
स्तयोर्द्वयोः सङ्गतयोः समासीत् ॥
अतो न तस्मान्मनसः प्रमादः
कदाचिदेव प्रतिपन्नभावः ॥१३॥

अतः शरत्पोषित एव ह्यो
हेमन्तराजः श्रियमातनोति ।
शस्यप्रवृद्धया फलितप्रभावां
नितान्तमोदान्तरितस्वभावः ॥१४॥

शरत्प्रभाजातक एव ह्यो
हेमन्तराजश्च तथा प्रपन्नः ।
भूयोऽपि लोके च यथा समाधिः
समेति मोदं न समाधिमुच्चैः ॥१५॥

तुषारसज्जीकृतशाद्वलं　च
मुक्तासुमज्जीकृतमिन्द्रनीलम् ।
रवेः कराग्रैर्मृदु तैजसन्तद्
हेमन्तराज्यस्य च भूमिशैली ॥१६॥

तुषारलीलाललितैः सुपत्रै—
रक्तांशुभिन्नै रुचिरैर्लतानाम् ।
ऋतुस्वरूपः प्रथितः प्रभाते
क्वचित् पतद्भिर्मुदितैः पतद्भिः ॥१७॥

कृषीवलानां विकलीकृतानां
दृग्वारिधारापतितेव भूमौ ।
तुषारधारा प्रतिभाति शस्ये
क्वचिद्विहीने च फलेन दैवात् ॥१८॥

क्वचित्सदानन्दभरैव भव्या
धारा शुभेयं तु कृषीवलानाम् ।
शस्यप्रभावेण समृद्धिगर्भा
तुषारपातैर्मुदितं च शस्यम् ॥१६॥

विभावरीयं समदा विभाति
रवेः प्रतापः प्रियमातनोति ।
रविः, शशी नो, प्रतिभाति सेव्यो
गायन्ति नीडेषु विहङ्गरामाः ॥२०॥

लताप्रताने समदा विहङ्गा
गायन्तिपुष्टा लघुभिः कण्ठैस्ते ।
मुनेरिवेत्थं विहगस्य चर्य्या
शुद्धा स्वपत्न्यां रतिमावहन्ती ॥२१॥

न चन्द्रकान्तैर्मणिभिः कृतान्तः
कुर्वन्त्यलं ता मुदिताभिरामाः ।
कुन्देन्दुतुल्यस्फटिकैश्च हारै-
र्न वा युवानो हृदयं विशालम् ॥२२॥

ऊर्णाभिरुष्णाभिरपूर्वमङ्गं
स्वीयं समाच्छाद्य प्रियानपि स्वान् ।
शीताभिभूता निशि कोमलाङ्ग्यः
शयीध्वमत्रेति समर्थयन्ति ॥२३॥

ताम्बूलपूर्णाननरूपमुच्चैः
पश्यन्ति रम्याः सुमदर्पणेषु
रामा हि कामाकरिता प्रदोषे
शृङ्गारवेशै रमणप्रलुब्धाः ॥२४॥

वातैर्विभिन्ना प्रकृतिर्विचित्रा
बिभाति लोकेषु विचित्ररूपैः ।
क्वचं च रौद्रा क्षणमेव शीता
वियत्यमेवं विविधस्वरूपा ॥२५॥

रक्ताङ्गरागा च कुमुद्वतीयं
　चन्द्रप्रियेयं न च चन्द्रवर्णा ।
शीता च शीतप्रभया प्रफुल्ला
　निशानुरागा निशया विभाति ॥२६॥

निदाघतापाद् विपरीततापो
　रवेर्यतोऽयं हिमभीतमित्रम् ।
कालप्रभावात्तु स एव मित्रो
　मित्रं बभूव स्पृशतोऽपि हृदयः ॥२७॥

केचित्तपोभिश्च निशां नयन्ति
　केचित्सुविद्याभ्यसनप्रयासैः
अन्ये घनेशाः सुरतैश्च मद्यै-
　र्जाता त्रियामा भुवि चैकयामा ॥२८॥

नीहार वातावरणप्रभावै
　र्ध्वान्तप्रचारैश्च तमोवितानैः ।
निशा व्यतीता च विचित्रभावा
　विभात्यभिख्येव त्रिलेपहेतोः ॥२९॥

घनो घनो नेह विभाति लोके
　चन्द्रायते खे च रविस्तथापि ।
तत्रापि दीप्तश्च पुनर्विलुप्तो
　विचित्रतेजः समुपस्थितं हा ! ॥३०॥

प्रातर्द्विजानां विविधार्चनानि
शीतेन सङ्कोचमितानि लोके।
शरीर यात्रा विविधाश्रया हि
सम्पद्यते साऽपि कथं कथञ्चित् ॥३१॥

सदूर्ध्वलोकात् पुनरागता ये
ते जीवपुञ्जा विगताश्च शालिम्।
अन्नेन सार्धं च पुनः ततस्ते
गर्भं प्रयान्ति प्रतिकर्महेतोः ॥३२॥

तच्चेतनानां तु विलोपभावा-
दुज्झन्ति शस्यानि हरित्प्रभाश्च।
सुपक्वशस्ये च हतप्रभे ते
नयन्ति जीवाः समयं स्वकीयम् ॥३३॥

अत्रैव चक्रे वसतीह जीवः
सदन्नपुञ्जे निजभोगवश्यः।
अत्ता[1] तथान्नं सममेव युग्मं
दृश्यं विभिन्नं भुवि भावनिष्ठम् ॥३४॥

तुषारपातेन सहैव जीवाः
पतन्ति शस्येषु च तत्त्ववत्सु।
भोगेन सार्द्धं च परोपकारं
चिकीर्षवस्ते निजपातनेन ॥३५॥

१. पूर्वज-माश्रितोऽत्ता।

क्लिमेव दंश किल वृश्चिकोऽसौ[1]
यच्छीतभावः समुपस्थितो हा ! ।
हेमन्तराज्यस्य तु सैव शैली
मह्लक्षणा सा कथिता तु तज्ज्ञैः ॥३६॥

हेमन्त एवेह मधोश्च भूपो
मध्ये यतोऽयं प्रतिभाति चापः[2] ।
ईति प्रणाशे बहुशो निशायां
तुषारपातः शरवृष्टिपातः ॥३७॥

अभिसरति निकेतं कामकान्तस्य हृद्यं
सुललितमृदुपट्टै रङ्गमाच्छादयन्ती ।
विकसितमुखरागं भावमानं वहन्ती
मधुरमधुसुगन्धैराननेनैव रम्या ॥३८॥

अतिशयरतिलीलारीतिरम्या निशार्दौ
मृगमदललिताङ्गैः कामकान्तं प्रियेशम् ।
वशयति मृगनेत्रा कामकेलिप्रवीणा
नवनिधुवनलोलावृत्तिरम्यप्रचारैः ॥३९॥

दृढतमपरिरम्भैर्नर्मभाव्यैरधीरा
विविधविधिरतीशप्रक्रियाभिर्विनिक्तम् ।

१. वृश्चिकसंक्रान्तिः । २. धनुः संक्रान्ति. ।

कथमपि हि विचित्रा हावभावप्रभावै-
र्ज्वलयति मदनाग्निं मध्यरात्रे पुनः सा ॥४०॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
वैश्यपरिचये हेमन्तवर्णनं नाम तृतीयः सर्गः ॥



## चतुर्थः सर्गः

समावेश पत्न्यां सुगर्भस्य चिह्नं
समस्तं यथावत् विभाति प्रफुल्लम् ।
स कर्माणि धर्मप्रियश्चापि नित्यं
करोतीह शास्त्रप्रतिष्ठानि यावत् ॥१॥

"तदीयश्च पुत्रो धनेशः प्रजातः
शमायुश्चिरं चापि तस्येह रम्यम् ।"
भविष्यद्वचस्तद्वदन्ति प्रपन्नाः
शुभं दिव्यदृष्टिं च तेजो दधानाः ॥२॥

स्ववंशप्रदीपश्च केतुः प्रतापात्
करिष्यत्यसौ स्वीयचित्तेन कार्यम् ।
पितुर्नापि मातुः स चित्तानुपायी
भविष्यत्रवासौ च लोकानुरागी ॥३॥

स्ववंशानुरोधेन नामापि तस्य
प्रजातं यथावच्च शास्त्राद् 'धनेशः' ।
धनेशः पिता चापि द्रव्यप्रफुल्लो
गुणेनैव, नाम्ना समाधिस्तु तावत् ॥४॥

स "जीवस्य तत्त्वं परं स्वार्थरूपं"
सदा लोकयात्रासु बालो प्रतीति ।

करोतीह कार्याणि चित्तप्रसादान्–
न देवः प्रमाणं न वा कोऽपि चान्यः ॥५॥

क्रमेणापि सोऽयं पितुर्वै निदेशं
सुयुक्त्यैव पुष्टं करोतीह शिष्टम् ।
न रूढिश्च चित्ते कदापि प्रसन्ने
प्रभाति प्रपन्नं तु लोकोपचारे ॥६॥

स चूडाक्रियाभिः प्रभाभिः प्रसादं
दधानो विशेषं च रम्यो वचोभिः ।
ब्रुवाणोऽपि लोकप्रदुष्टं वचोऽयं
प्रियो लोकहृद्यः श्रियैव प्रदत्तः ॥७॥

सुभूषाभिरुग्रश्च रम्यो विभूत्या
श्रियाऽलङ्कृतोऽयं हि तद्वत्त एव ।
न बाल्यात्तु चेतस्तदीयं कदाचिद्
विभातीह दुष्टं यथा तत्क्रियाभिः ॥८॥

धनेशश्च मौञ्जीक्रियाभिर्विशेषः
प्रसन्नः प्रियः प्रीतिदो भावरम्यः ।
प्रजातः स्वतेजोभिरुग्रत्रयीभिः
स संलालितो वापि धीभिर्यथैव ॥९॥

धनेशः श्रियो भाव एव प्रभाति
भविष्यत्प्रभा तस्य निष्ठा च तस्मिन् ।
न सम्बुद्ध्यते तस्य भाग्यप्रभावो
भविष्यद् यथाऽसौ च कालक्रमेण ॥१०॥

ध्वनिर्वै यथा वाक्यपुञ्जे विभाति
सदार्थान्तरं वापि शब्देषु निगूढम् ।
तथा तत्स्वभावं न लोकः समस्तं
स जानात्यमद्रं वनाग्निस्वरूपम् ॥११॥

प्रकृत्या यथा चन्द्रकान्ते च चान्द्रं
मणौ वापि सौरे रवेस्तेज एव ।
अवस्थान्तरार्थं च तत्त्वं दधाना
धनेशे तथैव प्रभा पितृदुष्टा ॥१२॥

सुकालेन योग्यां सुपत्नीं सुरूपां
स लेभे विवाहप्रवाहेण तन्वीम् ।
स्वकर्मार्जितायां च तस्यां प्रमोदं
स भुङ्क्ते प्रकामं रतीशप्रभाभिः ॥१३॥

समाधेस्तु कर्माणि पूर्वार्जितानि
क्षयं यान्ति कालप्रमिश्रानि लोके ।
यथा कृष्णचन्द्रस्य तत्त्वं विलीनं
क्रमात् सौरबिम्बे च कालेन खिन्नम् ॥१४॥

यथा मेघमालासु लीनश्च चन्द्रो
विखिन्नोऽपि पक्षेषु कृष्णेषु दृश्यः ।
समाधेः प्रभावस्तथा शक्तिहीनः
क्रमेणैव पश्चा विभिन्नो विभाति ॥१५॥

सुपत्नी च तस्य प्रियेयं सुलीना
विनीता स्नुषायाः सदा याति तस्याम् ।
'भर्त' चापि तस्या न कार्यं करोति
रवेर्वापि तेजो यथा तोयदेषु ॥१६॥

सदा चावधिः कर्मजो भाग्यनिष्ठो
न नाशश्च तस्येह केनापि भाव्यः ।
तदन्ते फलं तत्र भिन्नं हि दृश्यं
प्रियं चाऽप्रियं चापि भाग्येन सर्वम् ॥१७॥

स पूर्णोऽपि चन्द्रो हि सर्वप्रभावात्
तमोभिः क्वचिद् ग्रस्यते दैववश्यः ।
न च क्षीयतत्त्वः कदाचित्तु लोके
यतो भाग्यविः स्याच्च तस्यापि पर्वः ॥१८॥

अतो वैश्यपत्नी प्रियं स्वामिनं स्वं
विहायैव मग्ना नियुक्ता हि पुत्रे ।
तयोर्वापि भक्तिर्न तस्मिन् सभायौ
"निकृन्तन्ति भाग्यानि कर्माणि लोके" ॥१९॥

यथा चापि नीहारपुञ्जाभिभूतं
सदाकाशतत्त्वं तमोग्रस्तमेव ।
तथैव प्रभूतं विभातीह लोके
तदन्तःपुरे क्षीणतेजः प्रपञ्चम् ॥२०॥

निनिन्दत्यसौ पूर्वजन्मार्जितं स्वं
समाधिस्ततो भाग्यमेवेह नित्यम् ।
यशोभिः क्रियाभिश्च मोहेन खिन्नः
स दध्रे न धैर्य्यं कदाचिद् विवश्यः ॥२१॥

न येषां हि बुद्धिर्न वा चित्तवृत्ति-
र्विशुद्धा क्रिया वापि बोधप्रधाना ।
धिगस्मान् निममाँश्च मोहेषु खिन्नान्
स्वदाराभिभूतान् प्रियार्थेषु लीनान् ॥२२॥

तिरश्चामपि प्रायशो जातकेभ्यो
निजेभ्यः सुखं जायते वा प्रियाभ्यः ।
न वा दम्पती तौ च दुःखाभिभूतौ
मुनीनां सुवृत्त्यैव सञ्चरणौ तौ ॥२३॥

पराभूतचित्ताश्च धन्या वयं ते
समुत्पादिता यैश्च पुत्राः स्वकामात् ।
क्व कामेषु धर्म्मः क्व वा तेषु शान्तिः
फलं कामजातं न पुत्रं सुरत्नम् ॥२४॥

न वा येन शान्तिः स्वचित्ते कदाचित्
सुखं वापि लोके च बुद्धिः स्थिरा वा ।
कथं तेन भाव्यं परं स्वस्य पारे
कथं वापि मुक्तिः परा शान्तिरूपा ? ॥२५॥

न बध्नाति चित्तं मदीयं कथंचित्
प्रशान्ति मतिर्मां धृतिं वापि शुद्धाम् ।
मदीयः सुतः सा च भार्या मदीया
भवेतां ममैवेह भक्तौ विशिष्टौ ॥२६॥

धरायां च सत्यं गृहे वापि सर्वं
न मिथ्याऽस्ति लोके गृहे वा गृहं वा ।
मदीयेन भाग्येन मिथ्यास्वरूपं
विधत्ते सुतो वापि भार्या मदीया ॥२७॥

स हेतुस्तु को वा न भातीह किञ्चिद्
यतोऽद्य सर्वं स्वरूपेण भिन्नम् ।
विभाति प्रपञ्चः शिवस्यात्र लोके
प्रपञ्चः प्रपञ्चो विशेषेण दृश्यः ॥२८॥

प्रपञ्चो ध्रुवं दैवकृत्यं हि सर्वं
पृथिव्यां तथा वापि चित्ते मदीये ।
यतः सापि भोग्या प्रिया मे विशिष्टा
स्नुषायाश्च वरया प्रकृत्या गता हा ! ॥२९॥

स पुत्रोऽथवा मे न 'मे' भाति लोके
कथं दैवकृत्येन सर्वं पृथैव ।
निजात्मैव पुत्रस्वरूपेण दृश्यः
कथं लोकगाथात्र मिद्या यथावत् ? ॥३०॥

न वा मे विशेषेण चेतः सुवश्यं
मदीये कुपुत्रेऽथवा केवलं तत् ।
विवश्यं निमातीह पुत्रस्वरूपं
क्वचिद्वापि भार्य्या स्वरूपेण वाह्या ॥३१॥

मया बाल्यभावेऽथवा दायभागो
विभक्तोऽतिभुक्तः प्रपञ्चप्रियेण ।
ध्रुवं तस्य तत्त्वं च मत्तः प्रजाते
कुचाले स्थितं मां निबध्नाति दैवात् ॥३२॥

विलासः प्रियो मे च यस्याः प्रजातो
मयाऽत्रैव तस्या विपल्लभ्यते हा ।
स को पाऽथवैवैव तद्बोधगम्यं
सुतोऽयं च को वेति बुद्ध्या न बोद्धयम् ॥३३॥

स मातुः प्रियोऽयं प्रमत्तात् प्रमत्तो
जिघृक्षुः सुतो मे च सर्वस्वमेव ।
प्रमत्तः कथं वा स बालो मदीयः ?
प्रकृत्यैव तस्येह सर्वं मदीयम् ॥३४॥

अहं चैव मूढो ध्रुवं भावनाभिः
क्रियाभिश्च वा वाक्पदैर्लोकबोधे ।
हृतं तेन यन्मे हरिष्यत्यसौ यत्
तदस्यैव सर्वं प्रकृत्या यतोऽदः ॥३५॥

सुवृत्तिः कुवृत्तिस्तु याऽसौ सुतेन
समालिङ्गिता नापि सेयं मदीया।
न सम्पन्मदीया मदीया विपत्सा
मदीया च कान्ता तु तस्यैव माता ॥३६॥

स दिक्कालजातः पचिर्थैष सद्यः
समिद्धस्तु सोऽयं स्वपुत्रेण काले।
स्वकर्माज्यहव्यैः प्रकृष्टं ज्वलन् स
स्नुषाभाववातैः सबाहुल्यमेति ॥३७॥

दावानलत्वं गत एष वह्निः
संवर्द्धितो मोहनिदाघकाले।
अन्तर्बहिस्तत्त्वविशेषरूपः
पुनः समाधेर्हृदयं प्रविष्टः ॥३८॥

पत्नी तदीया हृदयस्वरूपा
सुतश्च शक्तिप्रभवः स्वचित्रात्।
यः कृष्णवर्त्मा तु तयोः प्रजातो
यायात् कथं स प्रशमं नु चित्ते ॥३९॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
समाधेर्मनस्तापवर्णनं नाम चतुर्थः सर्गः ॥

---

१ पचिः=अग्नि।

## पञ्चमः सर्गः

बली स नाम्ना सुरथस्य शत्रु-
र्नित्यं शरद्भावगतः प्रपन्नः[1] ।
संसारचक्रस्य विराजराज्ञीं[2]
भक्ताय नित्यं फलमर्पयन्तीम् ॥१॥

निश्शेषवन्द्यां भवभावभव्यां
दौर्भाग्यदावानलनाशकर्त्रीम् ।
अशेषसौभाग्यनिकेतनां तां
शरत्प्रभाभिर्नितरां ज्वलन्तीम् ॥२॥ (युग्मकम्)

वाग्भिः सशुभ्रां भवकार्यरूपां
स्तौति प्रपन्नः शरदभ्रलेखाम् ।
नितान्तकारुण्यलसत्प्रभावां
श्रियं सदाराधनलीनचेताः ॥३॥

गुणत्रयेण प्रतिभासि मात-
र्भिन्ना कलाभिर्विविधस्वरूपा ।
कीर्त्तिर्यशो वा सकलं तवैव
त्वमेव दृश्या भुवने समन्तात् ॥४॥

---

१ प्रपन्नः=शरणापन्नः । २. विराज =सौन्दर्यम् ।

सुवृत्तिः कुवृत्तिस्तु याऽसौ सुतेन
समालिङ्गिता नापि सेयं मदीया।
न सम्पन्मदीया मदीया विपत्सा
मदीया च कान्ता तु तस्यैव माता ॥३६॥

स दिक्कालजातः पचित्रैव सद्यः
समिद्धस्तु सोऽयं स्वपुत्रेण काले।
स्वकर्माज्यहव्यैः प्रकृष्टं ज्वलन् स
स्नुषामात्रवातैः सबाहुल्यमेति ॥३७॥

दावानलत्वं गत एष वह्निः
संवर्द्धितो मोहनिदाघकाले।
अन्तर्बहिस्तापविशेषरूपः
पुनः समाधेर्हृदयं प्रविष्टः ॥३८॥

पत्नी तदीया हृदयस्वरूपा
सुतश्च शक्तिप्रभवः स्वचित्रात्।
यः कृष्णवर्त्मा तु तयोः प्रजातो
यायात् कथं स प्रशमं नु चित्ते ॥३९॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
समाधेर्मनस्तापवर्णनं नाम चतुर्थः सर्गः॥

---

१. पचित्र=अग्नि।

पुनः पुनर्लाभकलापि साक्षा-
द्ध्येया[१] जगत्यां त्वमिहासि चित्ते ॥९॥

इन्द्रोऽपि साक्षात् सुरराज्यहीन-
स्त्वामेव काले प्रथितः प्रपन्नः ।
तवैव दृग्भिः सुरराज एष
स्वाराज्यदेवः परिपोषितः सन् ॥१०॥

शरत्प्रभा या च विभाति लोके
चित्तेऽप्यहो सैव कला[२] विविक्ता ।
सर्वं त्वमेवेह जगत्प्रसादो
यस्मिन् सुखं चापि परापि शान्तिः ॥११॥

निर्वाहशक्तिर्भुवि मे त्वमेव
गार्हस्थ्यलोकाश्रयमूर्त्तिरेवम् ।
सौभाग्यभाग्योदयशक्तिरूपा
सातत्य[३]निष्ठो हृदयप्रदीपः ॥१२॥

हरीतिमेयं कविभिः सुगीता
पयोदशोभानयनप्रसादः ।
सुरेन्द्रराज्ये च सदैव रम्या
लोकेश्वरेभ्यः प्रमुमावरम्या ॥१३॥

---

१. छुद्रवादि । २. श्लेष । ३. आनन्दस्य सन्ततीर्ना वा सातत्यम् ।

वृत्तिस्वरूपाऽपि[1] सुवृत्तिदा त्वं
वृत्त्यैव[2] लभ्या जनशक्तिभव्या ।
त्वं चक्रवर्त्तिप्रभुभावरम्या[3]
चक्रेश सेव्या भवचक्रलभ्या ॥५॥

भास्वत्प्रभाभिश्च विशिष्टरूपा
त्वं लोकयात्रासु च लोकसङ्गे ।
प्रसादरूपेण च विश्वरत्नां
तनोषि मातर्जगदेकतत्त्वम् ॥६॥

त्वय्येव भिक्षुत्वमथो नृपत्वं
स्थितं सदैव प्रथितं च लोके ।
ज्येष्ठा[4] स्वभावाद् भुवि भासि लक्ष्मि !
स्वयं कनिष्ठैव[5] सुपूजितासि ॥७॥

धीस्त्वं जनानां विभवैकदात्री
श्रिया ज्वलन्ती द्रविणेषु दृश्या ।
त्यागस्वरूपा यशसा विभासि
लाभस्वरूपा महसा तु रम्या ॥८॥

त्यागेन मन्या त्वमिहासि मात-
स्तथापि लोकेषु सदैव पूज्या ।

---

१. वृत्तिः = छन्दः । २. वृत्ति. = जीविका । ३. चक्रपदे श्लेषः । ४. ज्येष्ठा = अलक्ष्मीः = दरिद्रा । ५. कनिष्ठा = लक्ष्मीः ।

सफर्य्य एता जलकेलिनिष्ठा
वापीषु पुष्टाः समदाः समन्तात् ।
सिताण्डजाश्चापि तटान्तभागे
शरत्प्रमानूतनजातकास्ते ॥१९॥

जलागमे यः प्रथितः पयोदः
कृषीवलैर्नित्यमुपासितश्च ।
स एव मात्राभिरितस्ततो ह्य
संयाच्यते निम्नधरातलेषु ॥२०॥

घनो घनोऽयं क्वचिदेव दृश्यः
सौदामिनीनां निरहार्चिभावात् ।
हंसप्रधानं च सरो विभाति
बकः कचित् साम्यमुपैति दूरात् ॥२१॥

विलासिनीनां सुभगे ललाटे
बन्धूकपुष्पं च क्वचिद् विभाति ।
सौभाग्यमेवात्र परं निधाय
पतत्यहो रागपरं कुभूमौ ॥२२॥

शारदलक्ष्मीः कलहंसमाल्ये
बन्धूकपुष्पे द्विजराजबिम्बे ।
विभाति हृष्या च बकान् विहाय
कदम्बगुच्छं जलदं क्वचिन्च ॥२३॥

स्तुत्वैवमम्बां स बली सुहृद्भिः
सम्मन्त्र्य यातव्यविधौ मुमोद ।
सुप्तश्च खेदाभिहतो निशायां
स्वप्नान् ददर्श प्रियभावनिष्ठान् ॥१४॥

शुभान् प्रियाँस्ताँश्च सुरप्रधानान्
काम्यार्चनायाः शकुनस्वरूपान् ।
बली च शत्रोः पतनं भविष्यद्
दृष्ट्वैव चित्तेन गतः शुभाशाम् ॥१५॥

द्रष्टुं स्वमित्राणि बली प्रतस्थे
सदानुकूलानि मनः प्रसादात् ।
शरत्सुहासाननुभूयमानः
पाथेय कल्पान् पथि भाग्यशाली ॥१६॥

शारद्यशोभां मदिरामिवायं
पपौ दृशैवं निजधृतिशक्त्यै ।
युद्धेषु युक्तः स मदाय तावद्
यथा स्मृतीनां नियमो मृधाय ॥१७॥

शेफालिकानां पतनाद् धरायां
क्वचित्तु पद्मावलिकेलिहेतोः ।
रम्भावनानां पुनरङ्कुरत्वात्
सद्यो विभातीह शरत्सुजाता ॥१८॥

सफर्य्य एता जलकेलिनिष्ठा
वापीषु पुष्टाः समदाः समन्तात् ।
सिताण्डजाश्चापि तटान्तभागे
शरत्प्रभानूतनजातकास्ते ॥१६॥

जलागमे यः प्रथितः पयोदः
कृषीवलैर्नित्यमुपासितश्च ।
स एव मात्राभिरितस्ततो हा
संयाच्यते निम्नधरातलेषु ॥२०॥

घनो घनोऽयं क्वचिदेव दृश्यः
सौदामिनीनां विरहार्त्तिभावात् ।
हंसप्रधानं च सरो विभाति
बकः क्वचित् साम्यमुपैति दूरात् ॥२१॥

विलासिनीनां सुभगे ललाटे
बन्धूकपुष्पं च क्वचिद् विभाति ।
सौभाग्यमेवात्र परं निधाय
पतत्यहो रागपरं कुभूमौ ॥२२॥

शारद्यलक्ष्मीः कलहंसमाल्ये
बन्धूकपुष्पे द्विजराजबिम्बे ।
विभाति हृष्या च बकान् विहाय
कदम्बगुच्छं जलदं क्वचिच्च ॥२३॥

कान्तामुखाब्जे शरदागमश्री-
विभाति शारद्यकलासमेमे ।
घृताधरत्वात् सुभगं तथापि
यथा विजेता समरे चमूपः ॥२४॥

तमोऽन्धकारः प्रतिभाति लोके
तथापि मेघाल्पतया प्रकाशः ।
तारागणैरेव वियत् सुदृश्यं
स्वकीयशक्त्या प्रकृतिः सुरम्या ॥२५॥

किं मानरागः किमु कामरागः
किं रागरागः किमु सौरराग: ।
स रक्तिमा यः प्रतिभाति तासां
कुमुद्वतीनां किमु गर्वरागः ॥२६॥

कुमुद्वती या द्विजराजकान्ता
प्रबुद्ध्यते शीतकरांशुभिस्तैः ।
सैव प्रचण्डार्कमरीचिमालां
पश्यत्ययोग्यां नहि कामविद्धा ॥२७॥

नदीतटी मीनरतापि रम्या
शरच्च मेघैरपि नेत्ररम्या ।
तमोहता चापि निशा सुरम्या
कान्ता तथा जागरणेन रम्या ॥२८॥

या श्रीः स्वयं पुष्करिणीतटेषु
निमेषमात्रं दृशि नो शशाक।
संप्रोदिता सा शरदापि रम्या
निगूढभावा नलिनीवनेषु ॥२९॥

संवाहयन्ती स्वपतिं प्रयत्नात्
सुप्तं पतिं सागरतोयराशौ।
भक्त्या समाराधितविष्णुपादा
गृहे गृहे सा च शुभा विभाति ॥३०॥

शारद्रविस्तीक्ष्णकलाप्रयुक्तः
पूज्यः परं स प्रभया समेतः।
प्रताप एवेह सदर्चनायां
फलप्रदोऽयं प्रतिभाति हेतुः ॥३१॥

शारद्यशोभां प्रभवः स्मरस्य
लब्ध्वातिभव्यां ललितश्च धीरः।
रासे प्रवृत्तः किल कामकेलौ
कलासहस्रैः स बहुत्वमाप्तः ॥३२॥

बालाप्रसङ्गात्स रविः प्रचण्ड—
स्तुलागतोऽयं न मृदुस्तथापि।
तुलाप्रमाणं सहजं च सद्भि—
र्निगद्यते भेदविहीनमस्यम् ॥३३॥

अतस्तुलायामपि चण्डरश्मि—
र्विभाति सूर्यः स्वकलाभिरुग्रः ।
बालाप्रसङ्गाज्जनितः कलङ्कः
कदापि नापैति प्रसिद्धमेतत् ॥३४॥

जित्वा रणे सोऽपि रिपून् बलिष्ठः
कीर्तिद्यु तिः खे प्रविभाति चन्द्रः ।
कविर्यथान्तः कुमुदस्य भावं
धत्ते सुचन्द्रे च हरिप्रसादात् ॥३५॥

क्वचित्क्वचिद्वा प्रतिभाति चन्द्रो
मेघेन शुक्रः स्वरिपून् विजित्य ।
मृधे यथावापि रिपोः प्रभाया—
दन्तर्विघातं लभते प्रवीरः ॥३६॥

छाया सुवृत्तस्य शशिप्रभाभिः
शरत्प्रभाभिः शबलीकृतेव ।
गङ्गातरङ्गैर्यमुनाप्रवाहो
यथा तथैव प्रतिभाति भिन्ना ॥३७॥

रविः प्रचण्डस्तु शशी स भव्य—
स्तीक्ष्णो रविः खे मृदुलो हिमांशुः ।
चन्द्रप्रमेयं भवतीह भव्या
निशा च भव्यात्र तमश्च भव्यम् ॥३८॥

विधुप्रभावेण घनप्रभावः
पराजितोऽयं हि शरत्प्रतापात् ।
प्रावृट्प्रतापाज्जलदप्रभावाः
शरत्प्रतापाच्च विधुप्रभावः ॥३९॥

कमलकुसुमकाशैश्चन्द्रशुभ्रांशुभिस्तैः
सितकलकलहंसैर्मालतीपुष्पहारैः ।
विविधकुसुमभारक्लान्तवल्लीप्रभाभि-
र्नवशरदि वनश्रीर्व्यज्यते पुण्यभूमौ ॥४०॥

उडुपतिरिह शुभ्रो हृद्यगौरैर्मयूखैः
क्षपयति जलदांस्तान् दिक्षु कोविप्रभावात् ।
क्वचिदसितविवर्णाचिह्निभातीह दृष्टा
वियति जलदमाला सैष शारदभावः ॥४१॥

असुरपतिवलान्तः सिंहशक्तिप्रतापै-
र्भुजगविषमैस्तैः शान्तदैत्यप्रचारैः ।
सुरनिचयसुशक्त्या क्रान्तमाहिष्यशक्त्या
शरदि विजयचिह्नं व्यज्यते शारदीयम् ॥४२॥

स्थलकमलवनश्रीर्दृष्टिरम्या विभाति
नवपरिमलगन्धश्चापि कान्तामुखाब्जे ।
निशि तमसि च चन्द्रः किञ्चिदेवप्रसन्नः
क्षपितकिरणजालैर्भाति मध्ये कथंचित् ॥४३॥

शरशरजनितोग्नैस्तापबाहुल्यहेतो-
रुषसि किमु नु कान्ता स्नाति तोये निखिन्ना ।
प्रियजनविरहाग्निर्बाधते हा तथापि
युगलशमनहेतुर्नेह लभ्यो यतः स्यात् ॥४४॥

नवकमलविवृद्धिः पङ्कसंसक्तिजाता
तुहिननिकरपुष्टा वातसङ्घाद्विभीता ।
मदयति कृषिरागान् क्षेत्रिकाणां क्वचिद्वा
श्रमविजयविवृद्धिः पोषिका चोत्सवानाम् ॥४५॥

हरितवसनभव्या श्रेयसां कारणं सा
प्रकृतिरतिमनोज्ञा तच्छरद्वैभवा ।
हरिरतिरमणीया मेघमुक्तातिहृद्या
सततमिह तनोतु श्रेयसां पुञ्जमग्र्यम् ॥४६॥

हरितललितभव्या शस्यसम्पत्प्रभाभि-
र्नियति विधुविभाभिश्चन्द्रिकाकेलिनिष्ठा ।
सहजविजयपुष्टा शुभ्रशारदमाता
कमलवनगृहान्तः प्राप्यते लोकलक्ष्मीः ॥४७॥

रविकरशतजालैः क्वचिचपटी प्रसन्ना
कुमुदवनविभाभिश्चन्द्रसौहार्दपुष्टा ।

श्रुतिमधुरसुगीत्या प्राप्तमाध्वीकभावा
समुदयति च लक्ष्मीः शुभ्रशारद्यभूमौ ॥४८॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
चलिनो विजयक्रमे शरद्वर्णनं नाम पञ्चमः सर्गः ॥



शरशरजनिताग्नेस्तापबाहुल्यहेतो-
रपसि किमु नु कान्ता स्नाति तोये निखिन्ना ।
प्रियजनविरहाग्निर्नाधिते हा तथापि
युगलशमनहेतुर्नेह लभ्यो यतः स्यात् ॥४४॥

नवकमलविशुद्धिः पङ्कसंसक्तिजाता
तुहिननिकरपुष्टा वातसङ्गाद्विभीता ।
मदयति कपिरागान् चेन्निकाणां क्वचिद्वा
भ्रमविजयविशुद्धिः पोषिका चोत्सवानाम् ॥४५॥

हरितवसनभव्या श्रेयसां कारणं सा
प्रकृतिरतिमनोज्ञा तन्वुरद्देवभावा ।
हरिरतिरमणीया मेघमुक्तातिहृद्या
सततमिह तनोतु श्रेयसां पुञ्जमग्र्यम् ॥४६॥

हरितललितभव्या शस्यसम्पत्प्रभाभि-
र्विपति विधुनिभाभिश्चन्द्रिकाकेलिनिष्ठा ।
सहजविजयपुष्टा शुभ्रशारद्यमाता
कमलवनगृहान्तः प्राप्यते लोकलक्ष्मीः ॥४७॥

रविकरशतजालैः कीचिचण्डी प्रसन्ना
कुमुदवनविभाभिश्चन्द्रसौहार्दपुष्टा ।

सुरथं मनसा यान्ति शात्रवेन प्रचोदिताः ।
दृष्टयश्च यथा भाग्यरहिते च शनेः क्वचित् ॥९॥ युग्मकम्

शात्रवं नैव मित्राणां बलिनः सुरथाय वा ।
दौर्भाग्यचोदितं वैरं शनेर्दृष्टिर्यथा नरे ॥१०॥

स्वीयद्रव्याणि लोकाँश्च नीत्वा मित्राणि तान्यतः ।
अन्तस्तत्त्वप्रमोदं च बलिनः कारयन्ति हि ॥११॥

सुहृद्भिः सहितस्तावद् बली जातिरिपून् स्वयम् ।
शस्त्रास्त्रालङ्कृतो वीरः शरवृष्टिकरो बली ॥१२॥

वह्न्यस्त्रं सुरथेनेह क्षिप्यते यन्निरन्तरम् ।
वारुणास्त्रेण तच्चेन बलिनापि निहन्यते ॥१३॥

एकोऽपि बलिनो युद्धे शरः सञ्जायते बहुः ।
स बहुत्वं समापन्नो विनिहन्ति रिपून् पुरः ॥१४॥

अन्तर्भावविहीनेन सपर्य्या या कृता वरा ।
तस्या नो जायते शत्रौ फलं शरगतं क्वचित् ॥१५॥

न सपर्य्याशतेनापि फलं स्थायि प्रजायते ।
भावप्रियाः सुरा भक्त्या सदैव फलदायिनः ॥१६॥

कारणस्य जयश्चैव क्वचित् कार्यस्य वा पुनः ।
वह्न्यस्त्रस्य जयश्चैव क्वचिद्वा वारुणस्य हि ॥१७॥

प्रावृट्समागता मेघा यथात्र विफलाः क्वचित् ।
तथास्त्रं विफलं भाति सुरथे बलिनो मृधे ॥१८॥

## षष्ठः सर्गः

स पत्नी सुरथे तस्मिन् बद्धवैरश्च भक्तिमान् ।
आराध्यफलभोगी च लेभे मित्राणि नीतिभिः ॥१॥

अर्च्चनं यत्कृतं तेन शास्त्रविधिना सकृत् ।
तस्यैव फलभागं तं विजयः संप्रतीक्षते ॥२॥

यथा दृढप्रहारश्च कृतो शत्रौ प्रजायते ।
तथा भावविशेषोऽपि मित्रे सौहार्दसंयुते ॥३॥

भक्तिमानस्तथाऽऽराध्ये फलति प्रयतात्मनः ।
तस्यैव भक्तिहीनस्य सपर्य्या न फलप्रदा ॥४॥

फलप्रं न क्वचित् कर्म कृतमस्तु नरः स्वयम् ।
भावेन फलदातृत्वं कर्मणो नरि जायते ॥५॥

कर्मवृत्तिर्जयं सूते भावेन परिपोषिता ।
सुपत्नी च यथा पत्या पोषिता सुतयः शुभा ॥६॥

गुणाः स्वयं यथा पुत्रे प्रायान्ति विधिचोदिताः ।
तथा मित्रेषु सौहार्दं वर्द्धिष्यति प्रचोदितम् ॥७॥

सुहृदो वलिनश्चापि हृद्भावेन प्रचोदिताः ।
अभेदभावनाभिश्च सदा विजयकाङ्क्षिणः ॥८॥

सुरथं मनसा यान्ति शात्रवेन प्रचोदिताः ।
दृष्टयश्च यथा भाग्यरहिते च शनैः क्वचित् ॥९॥ युग्मकम्

शात्रवं नैव मित्राणां बलिनः सुरथाय वा ।
दौर्भाग्यचोदितं वैरं शनेर्दृष्टिर्यथा नरे ॥१०॥

स्वीयद्रव्याणि लोकांश्च नीत्वा मित्राणि तान्यतः ।
अन्तस्तत्त्वप्रमोदं च बलिनः कारयन्ति हि ॥११॥

सुहृद्भिः सहितस्तावद् बली जातिरिपून् स्वयम् ।
शस्त्रास्त्रालङ्कृतो वारः शरवृष्टिकरो बली ॥१२॥

ब्रह्मास्त्रं सुरथेनेह क्षिप्यते यन्निरन्तरम् ।
वारुणास्त्रेण तत्तेन बलिनापि निहन्यते ॥१३॥

एकोऽपि बलिनो युद्धे शरः सञ्जायते बहुः ।
स बहुत्वं समापन्नो विनिहन्ति रिपून् पुरः ॥१४॥

अन्तर्भावविहीनेन सपर्य्या या कृता वरा ।
तस्या नो जायते शत्रौ फलं शरगतं क्वचित् ॥१५॥

न सपर्य्याशतेनापि फलं स्थायि प्रजायते ।
भावप्रियाः सुरा भक्त्या सदैव फलदायिनः ॥१६॥

कारणस्य जयश्चैव क्वचित् कार्यस्य वा पुनः ।
ब्रह्मास्त्रस्य जयश्चैव क्वचिद्वा वारुणस्य हि ॥१७॥

प्रावृट्समागता मेघा यथात्र विफलाः क्वचित् ।
तथास्त्रं विफलं भाति सुरथे बलिनो मृधे ॥१८॥

प्रोद्दण्डदण्डे सुरथे चक्रवर्तिनि तन्नृपे ।
प्रारब्धचोदितानां च भयं क्वापि न जायते ॥१९॥

मुद्रापितो यथा देव्या शरः श्वसनविक्रमः ।
तथैवारातिमध्ये स पतितः कार्यकृद्धरः ॥२०॥

सुरथस्य च मित्राणि तपमां संक्षयान्मृधे ।
भारविद्धानि चापीह सफलानि न तानि हि ॥२१॥

केचित्तु सुहृदो युद्धे पातिताश्च वलक्षयात् ।
अन्ये च मनसा नैव प्रविशन्ति मृधे स्वयम् ॥२२॥

क्षत्रियस्य च तत्तेजः केवलं स्वयमेव हि ।
युद्धं प्रकुरुते भूमौ दिवि चापि समं क्वचित् ॥२३॥

युद्धोन्मत्तं विमत्तं वा दुर्मदं चापि दुर्दमम् ।
तत्तेजो बलिनो राज्ञो युद्धे पातयतीव हि ॥२४॥

बहुभिर्दिवसैरेवं युद्धे दैवप्रधानके ।
पराजितोऽयं सुरथस्तेजश्च पतितं समम् ॥२५॥

पराजिते च सुरथे क्षत्रिये नृपतीश्वरे ।
वृद्धामात्योपदेशाच्च स्वां पुरीमागतः स तु ॥२६॥

तत्राप्यमात्यवर्गेभ्यो चिन्ता तस्य प्रजायते ।
दुर्भावप्रेरितः सम्यक् शमः क्वापि न जायते ॥२७॥

सैन्यानि युद्धशिष्टानि हतानीव विभान्ति हि ।
यथा चैत्रोद्भवो मेघः प्रयाते पार्थिवे क्वचित् ॥२८॥

प्रजास्ताः पीडिता दैवाद्दुःखिता रिपुभीतितः।
नानुयान्ति क्रियाभिश्च दरिद्रप्रमदा यथा ॥२९॥

शक्तिस्तु केवला शुद्धा तदीया चत्रिया नृपम्।
अन्तःस्था न त्यजत्येषा विपत्स्वपि वरा परा ॥३०॥

तयैव दिवसान् सार्धं यापयति च तन्नृपः।
अन्तः शक्तिप्रभापुष्टः प्रजाभिः परितोषितः ॥३१॥

प्रजा एव च भूपालं सुरथं रिपुपीडितम्।
सान्त्वनाभिर्वचोभिश्च तोषयन्ति सुता इव ॥३२॥

साध्वी पतिव्रता शक्तिस्तदीया चत्रिया सती।
समासक्ता तु जीवेशे प्रकृतिः पुरुषे यथा ॥३३॥

धन्या च भूभृतस्तस्य शक्तिः शक्तिः प्रजा प्रजा।
अशक्त्या भूभृतं या च नो जहाति हृदा नृपम् ॥३४॥

श्रद्धया रचिता यावच्चावत्सा सङ्गता नृपे।
व्यतीते च कियत्काले जहौ सापि निजं पतिम् ॥३५॥

सुरास्ते पूजितास्तेन भावहीनेन दुर्जयाः।
अशक्ता नोपकुर्वन्ति कार्याँश्च प्रमिता यथा ॥३६॥

नित्यः सच्चित्सदानन्दो न तं पश्यति पूरुषः।
यथैव सच्चिदानन्दो योगी युक्तो न किंचन ॥३७॥

भाग्येनोपकृतं तस्य पुत्रवत्त्वं च नो यतः।
अन्यथा मोहबाहुल्यात्पतनं ध्रुवमेव हि ॥३८॥

अमराश्चापि ते धन्या येषां नो वा प्रियाप्रिये।
भुक्त्वा भोगाँस्तु भक्तेभ्यो ये न पश्यन्ति तान् पुनः ॥३६॥

स्मृत्वा कुलं स्वं सुरथोऽतिधीरो
धर्म्मस्य सिन्धौ सततं सुमग्नः।
सन्तोषितोऽयं बहुधैव शक्त्या
कथं कथं चिद्धृतिमेव धत्ते ॥४०॥

स्मृतिवचनपरोऽयं क्षत्रियाणां वलिष्ठः
सुरथ नृप इहासीत् क्षीणशक्तिर्विभिन्नः।
सततमपि यथान्तः सान्त्वनाभिः प्रजानां
सुललितवचनानां तोषितः प्राप शान्तिम् ॥४१॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
सुरथपराजयो नाम षष्ठः सर्गः ॥



## सप्तमः सर्गः

भूचक्रवर्ती नृपराज एष
विखिन्नचित्तः कुलकेतुरत्नम् ।
स्वपुण्यपुञ्जैः सततं विहीनो
धृतिं दधानो निजकर्म भुंक्ते ॥१॥

प्रिया च तस्य प्रियमेव कान्तं
पतिं विखिन्नं मनसानुरक्ता ।
प्रासादहीनो गृहमेव तुच्छं
संसेवते धर्मपरायणा सा ॥२॥

अथश्च कालः शिशिरः प्रजातो
यस्मिन्निपण्णः सुखमेव भुङ्क्ते ।
सौभाग्यपुष्टः परमं, तथाहि
भुङ्क्ते स्वदुःखं शुभभाग्यहीनः ॥३॥

स्मृत्वा स्वदुःखं विविधं च भोग्यं
सदम्पती भाग्यहतौ विखिन्नौ ।
पुनः पुनः खेदमिमौ प्रयातौ
रहो दधानौ च धृतिं कथञ्चित् ॥४॥

गृहे हसन्ती प्रभया सुपुष्टा
विभाति शैत्यावरणा निशायाम् ।

मदात्ययेनेव च शोणभावा
प्रमोदयुक्ता मुदितैः सुसेव्या ॥५॥

केदारभूमौ परिपाकपुष्टं
क्वचित्तु धान्यं स्वतपः सुनिष्ठम् ।
आनन्दमग्नं नवशालिभिस्तत्
परोपकाराय सतां विभूतिः ॥६॥

सदिक्षुदण्डावलिकेलिरम्यं
मधूदरं क्षेत्रमिह प्रभाति ।
आपीडितोऽपीह महान् परार्थे
धन्यः प्रकृत्या सदयस्तथेक्षुः ॥७॥

उदीयमानश्च रविः कलाभि-
र्लोकोपकाराय स बालदक्षः ।
आसेवते पृष्टमिव प्रशान्तो
न सम्मुखं क्लेशभयाय रम्यः ॥८॥

सुकञ्चुकानद्धपयोधराग्रां
पुष्पासवामोदितवक्त्रपद्माम् ।
कस्तूरिकालिप्तमुखारविन्दां
कामायमानां भजते प्रियेशः ॥९॥

उदीयमानोऽपि रविः कलाभिः
स लोकमित्रं प्रियमेव मित्रः ।

लोकोपकाराश्च सदैव सन्तो
　भवन्ति बाला अपि ते प्रभाभिः ॥१०॥

व्यवायकेलिश्रमजाततन्द्रं
　समीक्ष्य रामा स्वपतिं प्रियं तम् ।
संवाहयन्ती स्वकरेण गाढं
　कामं पुनर्व्यञ्जनयत्यजस्रम् ॥११॥

स्वादूनि भोज्यानि गुरूणि कान्तो
　भुक्त्वा च शय्यां परिसेवते सः ।
कान्तां पुनर्हेममानवर्णां
　लब्ध्वा च तस्यां सुरतिं विधत्ते ॥१२॥

न लोकयात्रामपि कर्त्तुमर्हः
　शिष्टो विशिष्टो जनतानुरक्तः ।
क्वचिच्च वासांसि गुरूणि कश्चिद्
　धत्ते निजेष्टं च करोति कार्यम् ॥१३॥

सुशीतलं वारि मनःप्रसादं
　पेयं च हृद्यं न तुषारवर्षम् ।
धात्रैव चाप्यायनकारणं तत्
　सुनिर्म्मितं जीवनतत्त्वमेव ॥१४॥

लघुत्वमुज्झित्य परं च तूलं
　महत्त्वमुच्चैः परमं विधत्ते ।

चीनांशुकानां महतां महत्त्वं
सामान्यभावेन गतं तु तूले ॥१५॥

वातस्य हृद्यत्वमपैति दूरं
पुष्पस्रजां चापि सुशोभनांशः।
वासोविहीनेषु कलेवरेषु
धत्ते महत्त्वं नहि स्तम्भुच्चैः ॥१६॥

ऊर्णा तु वस्त्रेषु महत्त्वमुच्चै-
र्धत्ते महार्घश्रियमादधाना।
नीचेषु तत्कम्बलमेव धत्ते
महत्त्वमुग्रं प्रियभावयुक्तम् ॥१७॥

उपस्कृताढ्यं परमं च भोज्यं
मांसः स मीनः प्रियभावमेति।
स्वादूनि दुग्धानि मधूनि चापि
दधीनि शस्तानि पराणि लोके ॥१८॥

काले च तस्मिञ्छिशिरे समाधि-
र्वैश्यो विशीर्णः स्वगृहे धनेन।
पत्न्या च पुत्रेण समं सुखेन
त्यक्तौ धृतिं नो विकलो हि धत्ते ॥१९॥

श्रिया विहीनः सुरथः सदैव
बहूनि दुःखानि यतश्च भुङ्क्ते।

समाधिरत्यन्तविखिन्नचेता
　धृतिं हि धत्तां स कथं धनेशः ॥२०॥

पत्न्या च पुत्रेण तथा श्रियाऽयं
　समुज्झितोऽर्थेन वरेण वैश्यः।
धृतिं हि धत्तां भुवि वैश्य एष
　कथं नु काले शिशिरे सुशीते ॥२१॥

तुषारवातः प्रतिवाति रात्रौ
　दिवापि शीतप्रभया प्रकामम्।
स एष कायं सुदृढं च लोके
　क्लिश्नाति शैत्यप्रतिबद्धमेव ॥२२॥

सुभूमिजातं परमं हि धान्यं
　स्विन्नं प्रकामं च गृहे स्वकीये।
पतिप्रियायाश्च करेण शुद्धं
　गन्धं विशेषं परमं विधत्ते ॥२३॥

यदोदनं भाति गृहे विशुद्धं
　प्रीत्या स्वपत्न्या सुपरिष्कृतं च।
तयैव साक्षात् परिवेषितं तत्
　प्रीतिं विधत्ते गृहिणश्च शीते ॥२४॥

धनेन हीनोऽपि नरश्च शीते
　पलालसज्जीकृतशय्यिकायाम्।

निशां नयत्येव सह स्वपत्न्या
सुखं समालिङ्गितविग्रहः सन् ॥२५॥

किं चैव विद्यासु विनोदभावैः
शास्त्रप्रदिष्टैर्विविधप्रकारैः ।
निशां क्वचित् केऽपि बुधाः प्रकामं
दीर्घां स्वबुद्ध्यैव सुखं नयन्ति ॥२६॥

निर्विण्णभावश्च समाधिरेष
शीतप्रधानं च सुखप्रधानम् ।
कालं विशेषं करणेन भुञ्जन्
दौर्भाग्यमेव स्मरतीह चित्ते ॥२७॥

अनेकखेदान्तरितैर्वचोभि-
श्चिन्ता च शोकः प्रविकाशमेति ।
जलाभिपूर्णे च यथा तड़ागे
प्रतिक्रिया स्याद्धि बहिः प्रवाहः ॥२८॥

निर्विण्णचेताः स वणिक् समाधि-
र्मनोविनोदाय कथं कथं चित् ।
कदा कदाचित् सुरथस्य गेहं
प्रयाति खिन्नं मनसा विदग्धः ॥२९॥

तत्रैव काञ्चित् स हि याति शान्ति
राज्ञः सदुःखस्य वचोभिरेवम् ।

धृतिं च धत्ते मनसा कथंचित्
सतां हि सङ्गेन सुखप्रकाशः ॥३०॥

समाधि-वैश्यः किल बन्धुवर्गैः
समुज्झितो याति विशेषचिन्ताम् ।
स चक्रवर्ती तु हृदा विखिन्नः
सामान्यभावं मनसा प्रयाति ॥३१॥

समानभावं च नरैर्नृपोऽयं
गतः श्रिया नो प्रतिभाति हीनः ।
मेघैः शरच्चन्द्र इव प्रसिद्धो
धत्ते यतोऽयं न निजस्वरूपम् ॥३२॥

ललाटपट्टे सुरथस्य राज्ञः
श्रीरेव साक्षात् प्रतिभाति चान्तः ।
विभूतिरूपा नृपभाग्यलक्ष्मीः
ऋते तु राज्या नहि भावभव्या ॥३३॥

राज्ञी पुरा या च शचीस्वरूपा
जनैर्मुधैव प्रतिसेवितेयम् ।
पत्न्यैव साक्षात् सुरथस्य सैषा
चक्षुः प्रपीड़ां जनयत्यजस्रम् ॥३४॥

तयैव साक्षान्नृपतीश्वरोऽय-
माभासितः शान्तिकलाभिरुच्चैः ।

निशां नयत्येव सह स्वपत्न्या
सुखं समालिङ्गितविग्रहः सन् ॥२५॥

किं चैव विद्यासु विनोदभावैः
शास्त्रप्रदिष्टैर्विविधप्रकारैः ।
निशां क्वचित् केऽपि बुधाः प्रकामं
दीर्घां स्वबुद्ध्यैव सुखं नयन्ति ॥२६॥

निर्विण्णभावश्च समाधिरेष
शीतप्रधानं च सुखप्रधानम् ।
कालं विशेषं करणेन भुञ्जन्
दौर्भाग्यमेव स्मरतीह चित्ते ॥२७॥

अनेकखेदान्तरितैर्वचोभि-
श्चिन्ता च शोकः प्रविकाशमेति ।
जलाभिपूर्णे च यथा तड़ागे
प्रतिक्रिया स्याद्धि बहिः प्रवाहः ॥२८॥

निर्विण्णचेताः स वणिक् समाधि-
र्मनोविनोदाय कथं कथं चित् ।
कदा कदाचित् सुरथस्य गेहं
प्रयाति खिन्नं मनसा विदग्धः ॥२९॥

तत्रैव काञ्चित् स हि याति शान्तिं
राज्ञः सदुःखस्य वचोभिरेवम् ।

सुललित ललनाभिर्नित्यमेवेह भोग्यं
शिशिर इह हि जातो हंसकेलिप्रसादः ॥४०॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
शिशिरपराभवो नाम सप्तमः सर्गः ॥



घृतिं सदाशामपि मार्थनिष्ठां:
घत्ते समाधिर्न च भाति नष्टा ॥३५॥

भविष्यदर्थस्य सुखं हि लोके
प्रायेण दुःखैः प्रचिकाशमेति।
इतीव तत्त्वं भुवि मानवानां
संदृश्यते पुण्यवतां समन्तात् ॥३६॥

आर्त्तस्तथापीह हृदा विभाति
भूपालपूज्यश्च पियास्यदुग्रः।
अन्यत्र नो चेत् पतिदेवता सा
राज्ञी गृहे स्यात् पतिशक्तिरूपा ॥३७॥

सुरथो नृपतिर्निजशक्तिरतो
मनसा वचसा वपुषा यशसा।
स हि भाति सदैव कलारहितो
विधुरेप यथैव दिवाकलितः ॥३८॥

सुहृदौ विकलौ भ्रमया पतितौ
भुवि तौ कलया रहितौ च रहः।
नलिने च यथैव नदस्य जले
शिशिरप्रभया मृदिते गलिते ॥३९॥

अतिसितजलपूर्णं कुम्भवैशिष्ट्यशिष्टं
मकरकुलनिवासः पुष्करं तीर्थ्यमेतत्।

सुललित ललनाभिर्नित्यमेवेह भोग्यं
शिशिर इह हि जातो हंसकेलिप्रसादः ॥४०॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
शिशिरपराभवो नाम सप्तमः सर्गः ॥



## अष्टमः सर्गः

भूपाल एष बहुधा विकलो दशां तां
चित्ते दधात्यखिलभावभरस्वभावात् ।
यात्रामयं च कुरुते सहसा वनार्थे
भक्त्या प्रयाति मनसा शिवसूनुमादौ ॥१॥

सम्यङ् नतः स भजते शिवसूनुमेवं
विघ्नान्तकं गणपतिं भवमङ्गलं तम् ।
वाग्भिः स गद्गदस्वरः पुलकाञ्चिताङ्गो
भक्त्या सदैव शुभदं भवशान्तिमूलम् ॥२॥

कल्याणमूर्तिरसि नाथ ! सदैव पूज्यो
नामैव ते च परमं शुभदं हि गीतम् ।
लोके नहीह कलिजाः प्रभवन्ति विघ्ना-
स्त्वन्नामकामपरिकीर्तनभीतसत्त्वाः ॥३॥

ब्रह्माण्डराज्यपरिधीश्वरचक्रवर्ती
शम्भुस्तवैव जनकः श्रुतिकीर्तितश्च ।
तेनासि नाथ ! सकलः प्रथमः कुमारो
वृद्धिप्रदश्च सततं शिवजो हि बालः ॥४॥

विद्या सुबुद्धिजननी त्वयि नाथ निष्ठा
बुद्धिर्विवेक जननी च तवैव शिष्टा ।

शान्तिस्तवास्ति भगिनी जनकप्रसूता
कीर्त्तिस्तु सा तव सुता शुभनामजाता ॥५॥

शम्भोः सुतस्त्वमसि भाववयश्च गौर्य्या
नप्ता नगेश्वरवरस्य हिमेश्वरस्य ।
त्वं चेन्नहीह भगवन् विभवप्रदाता
हा बन्धुतन्तुरिह यातु कुतो विधातुः ॥६॥

सन्तानतन्तुमिह नाथ ! सदा प्ररच
ज्ञानं च बोधय परं भवमुक्तिहेतुम् ।
बुद्धिं कुरुष्व मम लोकवरार्थलाभे
शान्तिं च देहि मनसो हृदयाब्जजाताम् ॥७॥

मातामहस्तव नगेश्वर एष वृद्धो
रत्नेश्वरो हि परमः प्रथितो गिरीशः ।
लक्ष्म्याः प्रियोऽसि कविजो गिरिजाभिजात-
स्तत् त्वं कथं न शिवजो धनदो वरिष्ठः ॥८॥

पत्नी तवास्ति सकला सकलार्थसिद्धि-
र्बुद्धिर्द्वितीयदयिता त्वयि निष्ठतत्त्वा ।
जातौ तयोश्च शुभदौ तव लाभलक्ष्यौ
कल्याणमूर्त्तिजनितौ विभवप्रदौ तौ ॥९॥

एकापि सिद्धिरिह भाग्यचयार्थरूपा
बुद्ध्या सहैव किमिवास्तु नहीश ! वन्ध्या !

तद्विघ्ननाथ इति लोकमतिप्रसिद्ध
स्त्वं मे कथं न मनसा वचसा प्रपूज्यः ॥१०॥

सर्वप्रियौ तव सुतौ भुवि लाभलक्ष्यौ
कीर्त्या वरौ च वरदौ जगति प्रसिद्धौ ।
लोकोपकारनिपुणौ भवकृत्यतत्त्वौ
तौ लोकनाथ ! सततं प्रणमामि हृद्यौ ॥११॥

अन्तः स्फुरत्कमलभावभवौ च पूज्या-
वाशाप्रपूर्त्तिकरणे प्रथितौ वरौ तौ ।
सद्भक्तिपीठजनितौ तव नामजातौ
लोकप्रियौ च सदयौ मतिमातृकौ तौ ॥१२॥

बुद्धिस्तु सैव मतिरित्यपरासुनाम्ना
सिद्धिः प्रिया च सततं भवतस्स्वरूपा ।
ते चापि लोकशरणं तरणी जगत्यां
भावस्तरं च; भुवि ते मनसा प्रपूज्ये ॥१३॥

पाशाङ्कुशौ च करणे स्वकरेण बिभ्रद्
भग्नं स्वकीयरदनं भवभक्तिमानम् ।
सुस्वादुमोदकमथो शिशुतोपकारि
प्राप्ताशिषश्च शिरसा शरणं मम त्वम् ॥१४॥

उमा तु ते गौः परमास्ति देवी
तद्भावजातोऽसि च शम्भुधनुः ।

ज्ञानेन बुद्ध्या भवतः प्रभावः
श्रेयः परं नाथ सदैव यचे ॥१५॥

गजाननत्वं तव नाथ लोके
सिद्धं प्रतिष्ठाकरणात्सुरस्तु ।
अतश्च सर्वप्रथमा प्रतिष्ठा
तवैव लोके शुभदा प्रतिष्ठा ॥१६॥

चन्द्रेण सार्द्धं सहजस्य भावः
सुधानिधेस्ते प्रथितः पृथिव्याम् ।
अतो हि भक्तस्य शरीररत्ना
ख्याता सदा नाथ तव प्रसादात् ॥१७॥

सद्वंशशुद्धिस्तु तव प्रसादाद्
भक्तस्य तावत् सुतरां प्रसिद्धा ।
तवैव जन्मार्जितकीर्त्तिलब्धं
सद्वंशसातत्यमपीश ! लोके ॥१८॥

उमैव पद्मा तव मातृरूपा
श्रीः सापि सौभाग्यमयी ध्रुवं हि ।
त्वन्नामकीर्त्त्यैव सदा सुलभ्या
सेयं हि भक्तस्य तव प्रसादात् ॥१९॥

फलं सुपुण्यव्रतजातमात्रं
पित्रोः शुभं भक्तशुभङ्करं च ।

त्वं कृष्णभिन्नोऽप्यथ कृष्णरूपो
वृद्धिप्रदो बाल इति प्रसिद्धः ॥२०॥

ग्रहो न कश्चित् प्रतिबाधते तान्
ये त्वां प्रसिद्धं तु सदा स्मरन्ति।
रविप्रसादात्तव नाथ शक्ति-
र्भक्तेषु नित्यं शुभदैव भूयात् ॥२१॥

प्रारब्धजाता बहवश्च विघ्ना
स्तिष्ठन्तु तावत्त्वयि शम्भुजाते।
संरक्षके भाग्यविधौ परात्मन्
गार्हस्थ्य सम्पत्तु तव प्रजा सा ॥२२॥

तवैव शब्देन भयार्दकेन
निभीरवास्ते प्रतिबाधिताश्च।
तद्भावबन्धः श्रुतयोः सदास्तु;
"न कर्णशत्रुः पुनरेतु दक्षः" ॥२३॥

नृत्यादिकाले शिवढक् प्रणोदिते
यद्वद्दीप शब्दो ध्वनितं करोति।
अशेषकैलाशभवेश्वरालयं
स एव शब्दः शुभदो ममास्तु ॥२४॥

दिशां सदीशा बहवोऽपि सन्तु
संसाररक्षार्थमिमे च दक्षाः।

एकैव नागाननशक्तिरेषा
पर्य्याप्तिरूपा मम शान्तिकृत्ये ॥२५॥

तत्सूनुयुग्मं मम भाग्यभावः
सदैव कृत्ये चरितार्थमेतु ।
अन्तः स्फुरन्मे च सरोजमेतन्–
नित्यं सनाथं शिवशान्तिरेतु ॥२६॥

किमेकदन्तेन ममारिपुञ्जं
हर्त्तुं विशक्ता भवतोऽपि शक्तिः ?
शिवस्य सूनोर्यदि शक्तिरेषा
साशा मदीया भुवि कुत्र यातु ? ॥२७॥

तवैकदन्तेन जगद्विबुद्धा
भक्तिः शिवे चापि विनीतभावः ।
शान्तिस्तु नित्या तव शक्तिपूज्या
तेनापि सर्वप्रथमा तवार्चा ॥२८॥

गार्हस्थ्यवैशिष्ट्यमिदं गृहे ते
संदर्शयते यो मनसः प्रमोदः ।
पत्नीगतः सूनुगतस्तथाम्बुज–
स्तेनापि काव्याङ्गभवः सदर्थः ॥२९॥

विचित्रशक्तिर्भवशक्तिरूपा
गौरी सती वा भवकारणं सा ।

आधारभावश्च सदा स शम्भु-
स्तयोः सुतस्त्वं भवकार्यरूपः ॥३०॥

मुहुर्मुहुर्वापि च सैव सृष्टि-
र्हशेषसंसारलेसत्प्रपञ्चः ।
सृष्टिः परा वा भवभावमूलं
तत्त्वं च सर्वं भवशक्तिजातः ॥३१॥

सादिप्रपञ्चप्रथमावतार-
स्त्वमेव युक्तश्च शिवावतीर्णः ।
अव्यक्ततत्त्वं तु शिवावुमौ तु
बोधात्परं बोधगतौ च नित्यौ ॥३२॥

स्पन्दो य एष प्रथमं च तत्त्वं
स शम्भुतत्त्वं विविधाकृतित्वात् ।
तद्व्यक्ततत्त्वप्रतिव्यक्तिजात-
स्त्वं कार्यरूपो भवरत्नराश्च ॥३३॥

विक्षेपशक्तिर्गिरिजैव नित्यं
तद्भावकार्यं प्रथमं त्वमेव ।
व्यक्तो गुहाभिन्नशिवात्मजोऽसौ
बोधस्वरूपस्त्रिपुटोऽपि दृश्यः ॥३४॥

शक्तिस्तु नित्या जगतः प्रपञ्चे
सैवेह गौरी जननी तवैव ।

तद्भावजातो जगतः सुपूज्य-
स्त्वं चार्थरूपो भुवि सर्ज्जनांशे ॥३५॥

अतश्च संचितविभूतिसत्ता
त्वदाश्रमस्था भवभाविकेयम् ।
सिद्धयादिनाम्ना प्रतिभाति नित्या
त्वं शङ्करात्मा भवशङ्करश्च ॥३६॥

लक्ष्मीः परावोधविवोधयुक्ता
प्रोज्झित्य सापत्न्यमतः समेता ।
भवोपकारा भवभक्तितत्त्वा
तवैव साध्या भुवनप्रपूज्या ॥३७॥

रक्तोऽपि रागेण विनैव लोके
विशिष्टभावेनयुतस्त्वमीश ! ।
लब्धप्रतिष्ठश्च तथैव काले
गजाननो बोधविवोधमूर्त्तिः ॥३८॥

त्वद्वाहनं चाम्युदयप्रशस्तं
विभुत्वपर्याप्तिनवप्रकाशः ।
अतोद्भवं नाथ सुपुण्यतत्त्वं
स्वयं च कृष्णः शिवयोगजातः ॥३९॥

---

१ अथेनादिसृष्टि सूच्यते ।

शिवादिदेवैर्विविधैर्वरास्ते
दत्ताभये ते त्वयि नाथ ! दत्ता ।
तेनापि भक्तस्य मनोरथास्ते
पूर्णाः सदैवेह सतो भवन्ति ॥४०॥

सद्भिः सुरैर्भावपरै विभुस्त्वं
मुदाभिषिक्तो विभवान् विभापि ।
तेनापि नित्यत्वमिहास्ति युष्मद्-
भक्तप्रयोधे विभवे च तावत् ॥४१॥

गजाननत्वं भवतश्च मत्वा
निःशङ्कभावो मनसा गृहीतः ।
विपक्षपक्षस्य विदारणार्थ-
मेकोऽपिदन्तः सफलं ध्रुवं ते ॥४२॥

तद्विप्रलम्भः प्रकृतेर्मयैव
सन्दृश्यते हा प्रकृतौ कुरीतिः ।
अशेषपक्षाः प्रतिकूलभावा
दक्षा विभक्ता भुवि भान्ति मह्यम् ॥४३॥

गजाननत्वं यदि तेऽपि नाथ !
प्रजायते स्थूलदृशे कथंचित् ।
कौलप्रतिष्ठा तव विश्वसम्पद्
विश्वेशजेनेह कथं नु रक्ष्या ॥४४॥

आश्रमीयां मनःशान्तिं सदा कुरु शिवोद्भव ! ।
स्वास्थ्यमृद्धिं प्रतिष्ठां च ज्ञानं श्रेयश्च वर्द्धय ॥४५॥

बुद्धिसिद्धी प्रिये यस्य लाभलक्ष्यौ सुतौ तथा ।
शिवयोश्चात्मजः श्रीमान् सोऽयं कल्याणदः सदा ॥४६॥

कल्याणकुम्भौ यत्कुम्भौ मङ्गलास्पदकारिणौ ।
आश्रमस्थैः सुसेव्येते सिद्धिबुद्धिप्रदौ शुभौ ॥४७॥

विपक्षदलनायैव रक्षणाय सदाश्रयौ ।
कीर्त्तिवल्ली फलाप्त्यै त्वदीयौ चरणौ मम ॥४८॥

सम्पदां करणौ कर्णौ जयध्वनिपरायणौ ।
अरिदावानलौ तौ ते द्विपद्घातनिवारणौ ॥४९॥

दुर्ग्रहाः सुरथस्यान्तः शक्तिहीनाश्च ते गताः ।
निशान्ते रवितेजोभिस्तमांसीव हतानि वा ॥५०॥

तथापि गुरुमेवायं कल्याणार्थमपेक्षते ।
भावोऽपि फलतामेति नोपदेशं विना गुरोः ॥५१॥

सूर्यकान्तमणिश्चापि रवितेजांस्यपेक्षते ।
अन्तरग्निः स तेजस्को हेतुभूतो हि तेजसः ॥५२॥

अतोऽयं सुरथो भूपः प्रतस्थे तुरगेण हि ।
अस्यासीन्मृगया व्याजः पश्यत्सु निजबन्धुषु ॥५३॥

हतान् विप्रांश्च नो भूपो जानाति विधिनोदनात् ।
मिथ्या चिन्ता ततो मोहाज्जायते तस्य भूभृतः ॥५४॥

प्रारब्धस्य प्रणाशेन महसैव मनोगतम् ।
भक्तिबीजं तदा तस्य ज्ञानेन सहितं यतः ॥५५॥

उदितं; तन्मनोभावो युक्ति दर्शनहेतुजः ।
तथापि नहि भूपालो वेत्ति सम्यक् किमप्यसौ ॥५६॥

निःसृतं भक्तिमूलं तत् प्रकृतेर्वापि शक्तितः ।
एकैव प्रकृतिः शक्तिमादत्ते सा ददाति वा ॥५७॥

पूर्वजन्मार्जितं ज्ञानं क्षणेनैवमुपस्थितम् ।
क्षणव्यापि न च स्थायि प्रारब्धावरणं यतः ॥५८॥

तत आरभ्य भूपाल ईषद्बोधपुरस्सरम् ।
नित्यां गौरीं स्मरत्येवं तदंशं गणनायकम् ॥५९॥

हेतुपक्षाश्रितं नैव ज्ञानं तस्य तथापि हि ।
नापि भक्त्याश्रयं क्वापि लभते भक्तिपूर्वकम् ॥६०॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये सुरथप्रधानकर्मे श्रीगणेशस्तुतिर्नामाष्टमः सर्गः ॥



## नवमः सर्गः

श्रीगणेशप्रसादेन धैर्य्यास्त्रश्चित्तरिक्रियाम् ।
तस्तम्भ मतिमाँस्तावद् धिया धृतिगृहीतया ॥१॥

सुरथस्तुरगारूढो वनं प्राप्तश्च शोभनम् ।
चिन्तया सहितो भूपस्तथा दृष्ट्यापि चिन्तितः ॥२॥

स्तब्धां भूपो न जानाति भविष्यच्छुभयोग्यताम् ।
प्रेरितां गणपेनापि लसन्तीं भक्तिमातृकाम् ॥३॥

मनसश्चानुकूलं स वने स्वावसथं नृपः ।
चकार करुणापात्रं स्वयं प्रारब्धचोदितः ॥४॥

एतस्मिन्नन्तरे तत्र सोऽपश्यन्मधुलक्षणम् ।
मृदुभिश्च शरैर्विद्धो यस्मिन् ब्रह्माण्डभूपतिः ॥५॥

मधुना चूतमत्तेन सुरवृन्दफलाय च ।
अपर्णातपसा शम्भुर्वन्दीकृत इवेश्वरः ॥६॥

पुत्री मुनीनामपि भक्तिभाजां
क्रियापराणाञ्च तपोबलानाम् ।
काचित्पतिं स्वं हृदये दधाना
ह्यपेक्षते सापि दिनावसानम् ॥७॥

सुरात्मजेव प्रतिभाति काचित्
कामप्रविद्धा समदा सदैव ।
वश्या प्रियान्तविवशा च पत्यु-
र्ददाति हृद्यं मदभावमेव ॥८॥

काचित्तु कान्ता विरहानलेन
विदग्धचित्ता प्रतिभाति खिन्ना ।
कान्तासु कामः क्वचिदस्त्रजालं
क्षिपत्यजस्रं सहसा प्रसूनम् ॥९॥

प्राप्तोऽपि दाहं सममेव वह्नि-
र्भाति कामोऽपि तदीयरूपः ।
कृशानुदग्धश्च कृशानुरूपो
लयप्रपाते प्रलयस्वरूपम् ॥१०॥

या वासना तस्य शरीरगस्य
रतिप्रधानापि पुरा शिवार्थे ।
सैवेह दग्धस्य च भाति लोके
दग्धा यतो नो रतिवासना सा ॥११॥

य आशुतोषश्च कृपाकलाभिः
सञ्जीवयामास मनोजमुग्रम् ।
तस्यैव रूपं च कदाचिदेव
ध्यातं हरेच्चेद्रतिभावनां ताम् ॥१२॥

तिर्यक् च कामाकलितो विभाति
मृगा मृगीषु प्रतिबद्धचित्ताः ।
धावन्ति वेगाद् रतिभावखिन्ना-
स्तथापि कामो न जहाति केलिम् ॥१३॥

मधोः सुहृत् काम इति प्रसिद्धो
लोकेषु सर्वत्र गतश्च भावः ।
पयोगतं वापि यथैव पाथो
विभाति दृश्यं रसने न चित्ते ॥१४॥

कस्तूरिकामोदमपि स्वदेहाद्
भिन्नं प्रपश्यन्ति मृगीषु मोहात् ।
धावन्ति वेगाच्च मृगाः प्रविद्धा
व्याधप्रविद्धा इव वा शरेण ॥१५॥

शिवोऽपि कामस्य सदैव सेव्यः
प्रपोपपत्येन तमेन काले ।
सौभाग्यकृत्ये च गिरीशपुत्र्या
गौरीप्रभावाच्छिवभावजातम् ॥१६॥

पुँस्कोकिलोऽयं रतिदूत एव
कामस्य वाऽसौ मलिनोऽपि साक्षात् ।
गुणा न रूपात् प्रभवन्ति लोके
गुणाः स्वतन्त्राः सततं विभाति ॥१७॥

चूताङ्कुराणामपि बाणरूपं
मधौ विभाति प्रभयापि तस्य ।
कालेन साद्धाद्धि गुणा विभान्ति
रसोऽपि चूतस्य न बाणवृत्तिः ॥१८॥

न कोकिलोऽयं प्रतिभाति हंसो
वर्षासु धारासु झणत्प्रभासु ।
कालेन साद्धाद्धि गुणा विभान्ति
मधौ न भेका मधुराः कदापि ॥१९॥

हेमन्तभावः स निदाघभाव-
श्चित्तप्रसादं मधुना करोति ।
न सङ्करो वै सततं जघन्यो
मधौ तु शम्भोः प्रतिभाति शैली ॥२०॥

तपः प्रभावो विगतो नराणां
तपस्तु तावन्मुनिकृत्यमेव ।
तपोबलानामपि कामराज्ये
जयश्च तावत् क्वचिदेव मन्ये ॥२१॥

विज्ञानविद्भिश्च कृशानुसेवा
सन्दर्शिता लोकहिताय चित्रा ।
हिताय तापो कथमेव सम्भवेद्
विषस्य नाशो न विषेण वा स्यात् ॥२२॥

मधुश्च लोकैः कथितः प्रसङ्गात्
स माधवस्य प्रिय एव पाठे ।
तेनापि कामस्य महत्त्वमुच्चैः
कामो यतोऽयं हि वसन्तमित्रम् ॥२३॥

किं वा स कामः स्वयमेव शास्त्रे
कृष्णस्य सूनुः कथितः प्रसङ्गात् ।
न पूज्यभावस्य च येन रक्षा
कृता हि लोकेऽपि शरत्प्रभायाम् ॥२४॥

कथं स वान्यव्रतरक्षणं हि
कुर्यात् कदाचिद् भुवने च मध्ये ।
धातुः कथं वापि शिवस्य धृष्टो
बुधैर्यतोऽयं कथितः प्रमत्तः ॥२५॥ ( युग्मकम् )

शिवस्तु गौरीप्रणयानुरोधात्
स्वयं स तस्याः पतिभक्तिवश्यः ।
देवप्रपञ्चे किमु वा हिताय
तेषां प्रजातः किल कामकेलिः ॥२६॥

एको वसन्तः किल वाक्यरत्ने
गतो बहुत्वं हि यतः स्वयं सः ।
इतः किमन्यद्धि मधोर्महत्त्वं
यद्वाक्यरत्ने स हि कामरूपः ॥२७॥

प्रवातधूता हि रसालमञ्जी
सुचुम्बितेयं भ्रमरेण साक्षात् ।
मुहुर्मुहुर्भाति यथैव बाला-
बिम्बोष्ठयुग्मे न च दन्तदंशैः ॥२८॥

पुँस्कोकिलोऽयं हि रसालमञ्जीं
भुक्त्वा निकूजत्यतिशोणदृष्टिः ।
स कामदूतः प्रमदाजनानां
हन्ताथवायं विरहानलत्वात् ॥२९॥

इयं हि मञ्जी किमु मञ्जिका[1] वा
मुहुर्मुहुश्चुम्बनपीडिता सा ।
ध्रुवं द्विरेफैः प्रतिसञ्जितेयं
सामान्यभावेन विभाति काम्या ॥३०॥

सामान्यपुष्टा प्रददाति शृत्तिं
प्रियानुकूलां हृदये स्मरस्य ।
कण्ठावसक्ते प्रणयेश्वरे वा
कान्तासु काम्यासु मनोहरासु ॥३१॥

पीतावशेषो भ्रमरस्य साक्षाद्
यो मञ्जरीणां रस एष सद्यः ।
पुँस्कोकिलैरेव निपीयते स
वसन्तमद्यं मदनस्य चापि ॥३२॥

१. मञ्जिका = वारवधूः ।

धन्योसि लोके मधुरेव सत्त्वं
स्थिते च यस्मिन् शिव एव साक्षात् ।
गौरीमुखाब्जे जगतां हिताय
व्यापारयामास विलोचनानि ॥३३॥

प्रीतिर्वसन्ते पुनरुक्तिदोषो
यतस्तु कामः स्वयमेव भूपः ।
रतिप्रसङ्गे च प्रियप्रियाणां
प्रमाणरूपो भुवने प्रसिद्धः ॥३४॥

रतीशदेवस्य च चन्द्र एष
साचिव्यमेव प्रकरोति युक्तम् ।
चन्द्रस्य तावद्दशधात्मशक्तिः
सुधाकरत्वं चिरजीवनाय ॥३५॥

कुन्दैश्च शुभ्रैर्मधुभावनेयं
पुष्टा न लोके यत एष शुद्धः ।
किं वापि सत्त्वाश्रय एव कश्चित्
कामो वसन्तस्य सुहृद्विभाति ॥३६॥

वसन्त एष प्रतिभाति दक्षो
योऽयं हि भूपः कथितः कवीनाम् ।
ऋतुस्वरूपेण समस्तलोके
हेमन्तराजस्तु चमूप एव ॥३७॥

अशोक ! कामस्य सुहृद् विभाहि
मित्रं यतस्त्वं हि मधोश्च सद्यः ।
त्वदीय मित्रत्वमिदं गतं क्व
विरक्तभावाश्रितनायकेभ्यः ॥३८॥

गण्डूषमद्यैर्मृदुनायिकानां
प्रफुल्ल एव त्वमिह प्रभासि ।
धन्यत्वमुच्चैः किमतस्त्वदीयं
भवेत्कतीनां हृदये सुवृत्त ॥३९॥

त्वं चम्पकः को सुरभि भासि पीतः
पीतस्त्वयाऽसौ रस एव साक्षात् ।
विरक्तकान्तस्य यतो न पातः
शृङ्गारनामापि च भावरिक्तः ॥४०॥

चूताङ्कुर ! त्वं च नगमसूतो
भासीह शश्वन्मधुभावबुद्धयै
रक्तः कथं त्वं च कषायतत्त्वं
त्वय्येव लोके प्रथितं वसन्ते ॥४१॥

पलाश ! भासीह यतः पलाशो[1]
विरक्तचित्ताश्रयतन्तु शत्रुः ।
किं वापि केतोरिह रूपरङ्ग-
स्त्वमेव साक्षाद्रतिकामनायै ॥४२॥

---

१ पलाशः=मांसाशी ।

भृङ्गोरजोभिर्मधुकामचित्तं
प्रकाशमेति प्रभया प्रकामम् ।
यदुर्वरं चाङ्कुरजं विभाति
कान्तासु सौभाग्यकरं हि तत्स्यात् ॥४३॥

किं वा स्खलद्बर्वरचूर्ण एव
कान्ताविरक्तिं भुवि सूचयन्सः ।
सौभाग्यपातस्य मिषेण सद्यो
रङ्गप्रपातं जनयत्यजस्रम् ॥४४॥

मा कोकिल ! त्वं सहसैव कूज
स्फुरत्प्रभायां च मधोः कदापि ।
स्वरे त्वदीये प्रमदाशतानां
सौभाग्यहेतुर्निहितो मधुत्वात् ॥४५॥

मधौ च रामो हरिरेव साक्षा-
ज्जातो विशुद्धो मरणाय नाथः ।
उज्झित्य पत्नीं किल मैथिलीं तां
पुनश्च कृष्णत्वमवापदेवः ॥४६॥

अतः स विष्णुः शरदः प्रभायां
कलासहस्रेण समेत एषः ।
रासेश्वरत्वं गत एव साक्षाद्
गोपीजनेभ्यो मुरलीकरश्च ॥४७॥

धन्यो मधुस्त्वं किलकाममित्रम्
यतः सुराणां रिपवो हतास्ते।
सौभाग्यभावे गिरिजाललाटे
तवैव कीर्तिः कथिता पुराणैः ॥४८॥

अङ्गानि चालस्यपराणि लोके
मुखं हि जम्भारतमेव नित्यम्।
तेष्वेव कामस्य रतिप्रभावो
विभाति निद्राकुलितेषु तावत् ॥४९॥

मुनिर्जहातीह परां च शान्ति
कामाप्यमानां प्रतियाति कान्ताम्।
उज्झित्य चित्तेन तपो विवश्यो
मधौ तु काञ्चिन्मनसानुगच्छन् ॥५०॥

वृन्तो विशेषो हि जहाति पत्रं
कामप्रविद्धश्च लतासु मद्वः।
नवीनपत्रैरपि भव्यभावैः
क्रमेण शान्ति च समेति सोऽपि ॥५१॥

प्रभाते स्नातानां नृपतिपतिकानां कुचतटे
नृकाम्यानां शोभा कृतरसचमत्कारलसितम्।

वपुर्गन्धैरिष्टैर्मृगमदसुगन्धैरतितरं
गलद्वासः कामात्कलयति मुनीनामपि मनः ॥५२॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
वसन्तवर्णनं नाम नवमः सर्गः ॥



## दशमः सर्गः

मधुकामगतं वनभाववरं
रमणाय हितं सुरयः स नृपः ।
अनुभूय परं शिवमत्र नतो
निज चेतसि सम्भृतवाँश्च वरः ॥१॥

स समाधिरपि प्रयतश्च वने
निजभावशतैर्हृदये व्यथितः ।
दिवसाँश्च वहन् मनसापि कृती
स्मरति प्रणतश्चरणं च परम् ॥२॥

उभयोर्हृदयं व्यथितं च वने
गृहखेदभवैर्निजभावशतैः ।
प्रियभक्तिलसन्मनसापि रतः
स्मरतीह सुतादिगतं च सुखम् ॥३॥

मनसा वचसापि च तौ प्रणतौ
परमेशपदं भवपितृपदम् ।
अपि कस्यचिदेव गुरोः शरणं
मिथ एव रतौ परबोधपदम् ॥४॥

भवभाग्यकरं हरिपादयुगं
भुवनस्य च हेतुमुमेशपदम् ।

प्रणमामि सदैव शुभं परमं
शिरयोर्विलसत्प्रणतोऽविरलम् ॥५॥

हरिमेव परं बलमेकमहं
प्रणमामि शुभङ्करमीशगुरुम् ।
उमयासहितं शुभदं परमं
पुनरीशपदं [redacted] मुरारिगुरुम् ॥६॥

गरुड्ध्वजमेव नमामि हरिं
पुरुषोत्तमपादयुगं प्रणतः ।
अपि धातृपदं भवहेतुवरं
प्रणमामि जगज्जनकं शरणम् ॥७॥

अवलम्बनमत्र ममार्त्तिहरं
हरपादयुगं गरलेन नतम् ।
गणपस्य पितुर्विलसत्परमं
भवहेतुपरं विभुभावभरम् ॥८॥

प्रमदाकृतखेदहरं च भगं
भवकार्यनिदानमपूर्वमिमम् ।
प्रियमात्मयं सकलं प्रणयं
प्रणमामि मनश्शरणं परमम् ॥९॥

भवकेलिचमत्कृतिभावभरं
जगतां जननं जनकं च परम् ।

शिवमेव सदैव नतः प्रणतो
हरिणा सहितं शरणं सुखदम् ॥१०॥

गिरिजापतिमेव नमामि पुनः
कमलापतिमेव नतो विकलः ।
गणपं च नमामि हृदा शुभदं
वचसा विभवेश्वरमेकमहो ॥११॥

नृपतेः शरणं परमं शिवजं
शिवदं च भवार्तिहरं मनसा ।
रिपुनाशकरं गणपं सशिवं
प्रणमामि सदैव मनोहरणम् ॥१२॥

स्तुतिभिः सहितौ विकलौ प्रणतौ
निजसेव्यपदं किमपीह वने ।
नहि कोऽपि तथापि दृढो मनसा
क्वचिदेव मनागपि शक्तिपदे ॥१३॥

विकलानि वचांसि तयोः करणे
पतितानि च मेधस एव मुनेः ।
अयमत्र मुनिर्मनसा सदयं
सदृशापि च पश्यति तौ प्रणतौ ॥१४॥

निजयोगबलेन तयोर्हृदयं
धृतिहीनमहो ■ च वेत्ति गलत् ।

मुनिरेष च तौ विनतौ प्रणतौ
विषयं परिपृच्छति खेदगतम् ॥१५॥

निजबोधगतं विषयं च बहिः
श्रवणाय पुनः परिपृच्छति तौ ।
नृप एव तयोः प्रथमः प्रणतः
स हि वक्ति मुनिं गुरुभावरतः ॥१६॥

भवतां विदितं सकलं मम त-
द्धृदयस्थितखेदकरं परमम् ।
नृपतिः सुरथो विकलो भुवने
स हि भिक्षुरयं प्रणतः शरणे ॥१७॥

अपरो भुवि वैश्यवरः प्रथितो
विनतोऽत्र तवैव पदे पतितः ।
स्वसुतादिषु चापि रतो मृदितो
निजबन्धुवरैर्विकलोऽपि हतः ॥१८॥

मुनिरेष तयोर्विकलां च दशां
मनसा प्रणिधाय पुनर्वचनम् ।
शुभदं प्रतिवक्ति तयोर्हितं
श्रुतिवर्गहिताय परं ललितम् ॥१९॥

नृपतिर्भुवने स्वरभावभरः
सकलांश्च सुरान् प्रणतो विधिना ।

नतिभिः स हृदा मनसा च वरान्
हृदयं तु नृपस्य न भाति दृढम् ॥२०॥

समता मनसः प्रतिभाति परा
सकलापि च खेदहृतैव वरा।
नृपतौ च कथं नृपभावभरे
त्वयि सा समता वसतु प्रथिता ॥२१॥

अत एव तथापि सुरेषु मनो
नृप! यातु च भक्तिलसत्सरलम्।
प्रथमं तत एव भवद्धृदयं
परमं शिवतत्त्वमनुव्रजतात् ॥२२॥

समता तव सा च कथं परमा
सकलेषु सुरेषु हृदैव भवेत्।
परबोधमतो भवमोहहरं
नृप! धारय मुक्तिकरं विरतः ॥२३॥

अमरेषु च कञ्चिदपि प्रभजः
सुरमेव, शुभामथवा परमाम्।
प्रकृतिं लसितां च गुणैः सकलां
गिरिजां शिवसाम्यगतां ललिताम् ॥२४॥

निजभक्तिलसद्धृदयं सरलं
क्वचिदेव निधेहि परं विमलम्।

अथवाप्यमरेषु समं हृदयं
सगुणेषु निधेहि च शक्तिधिया ॥२५॥

इदमत्र मया त्वयि तत् कथितं
जनलोकगतस्य च मार्गमिदम् ।
तपसां च फलैर्जनभाग्यगतं
सकलं प्रतिकूलमयो विहितम् ॥२६॥

नृपभावगतं च तपोभुवि तत्
कथमेव नृपेषु विशेषफलम् ।
प्रददातु कदाचिदपि प्रभया
कठिना हि यतो नृपकृत्यकला ॥२७॥

जनभाग्यगतं प्रतिकूलफलं
भुवि नाशमुपैति तपः प्रभया ।
अथवा परबोधहतं दुरितं
समभावकृतं च सदैव हितम् ॥२८॥

अत एव मया त्वयि तत्त्वमिदं
कथितं सकलं नरकृत्यगतम् ।
त्वमतः परमं गिरिजाचरणं
निजभक्तिबलेन च याहि हृदा ॥२९॥

श्रुत्वापि तत्त्वं कथितं नृपोऽयं
वैश्योऽपि खिन्नः पुनरेव भक्त्या ।

प्रोवाच बोधाय च शान्तिकामो
निर्विण्णचेताः गुरुभावनिष्ठः ॥३०॥

तत्त्वं च किं तज्जगतां हिताय
बोधाय लोकस्य च शान्तिहेतोः ।
हरिर्हरो वा गणपो नु भास्वान्
किं वापि किञ्चित् पृथगेव तेभ्यः ॥३१॥

मुनिः स मेधाः करुणाविवश्यः
प्रोवाच तौ तत्त्वमिति प्रसिद्धम् ।
ज्ञानाय भोगाय च कामनायै
लोकोपकाराय तथा यथातः ॥३२॥

विद्या स्वरूपापि च सास्त्यविद्या
धात्री च लोकस्य सदैव पूज्या
फलानि चत्वारि च तानि दत्ते
वर्गाश्रितानि प्रतिभाविता सा ॥३३॥

श्रीरेव साक्षाद् भुवि या च लक्ष्मीः
राज्यप्रदेयं हरिभावनिष्ठा ।
सौभाग्यपुञ्जेन गृहे वसन्ती
गृहस्थवर्गैरपि नित्यसेव्या ॥३४॥

सरस्वतीयं भुवि सत्त्वनिष्ठा
गौरेव वाक्येषु सदा वसन्ती ।

अस्यैव शक्त्या च जनोऽपि विद्वान्
गुरुर्गरीयान् यशसा विभाति ॥३५॥

इयं च शम्भोर्गृहिणी भवानी
गणेशमातापि कुमारमाता।
षष्ठीस्वरूपा शिशुपालिकेयं
कुमारपत्नी च कुमारधात्री ॥३६॥

विष्णोः प्रियेयं हि सुरेन्द्रसेव्या
सेव्या च दैत्येन्द्रवरैश्च लोके।
दशाननेनापि जनार्दकेन
जनार्दनेनापि गृहे वसन्ती ॥३७॥

सृष्टिं विधत्ते परमेशशक्तिः
शक्तिः शिवा या शिवभागनिष्ठा।
ब्रह्माण्डरक्षां प्रकरोति सैवं
लयस्वरूपापि च सैव शक्तिः ॥३८॥

वेदान्ततत्त्वं विबुधैः सदैव
प्रतिष्ठितः सा कथिता च शास्त्रे।
सांख्येषु शक्तिः प्रकृतिर्विचित्रा
चैतन्यहीना कथिता मुनीन्द्रैः ॥३९॥

शक्तिश्च विष्णोर्हरिरेव साक्षाद्
भेदो न कश्चिद्धि तयोः कदापि।

ज्वालापि वह्नेर्नहि वह्निभिन्ना
यथा तथैव प्रतिभाति शक्तिः ॥४०॥

सांख्यैस्तु सेयं कथिता विचित्रा
चैतन्यहीना च जडैव साक्षात् ।
चैतन्यभावः पुरुषेषु निष्ठा
जीवेषु नेयं हि मतिः सुमान्या ॥४१॥

चैतन्यमेवं पुरुषेषु सांख्यैः
प्रगीयते यद्विविधेषु शुद्धम् ।
मतिर्न सा ते च कदापि मान्या
चैतन्यभावस्तु सदैव शक्त्याम् ॥४२॥

वेदान्तशास्त्रेऽपि चिदाश्रयत्वं
तस्मिन् सदीशे कथितं प्रकामम् ।
ईशस्य तस्यैव च शक्तिरेषा
माया विचित्रा सदसत्स्वरूपा ॥४३॥

न लक्षणैः सा च कदापि कथ्या
ज्ञेया बुधैर्वापि कथं कथञ्चित् ।
आधारभूतो न च शक्तिभिन्नः
सदाश्रयोऽयं शिववाच्य एव ॥४४॥

वयं च तावत् प्रकृतिं विचित्रां
चिच्छक्तिरूपां हृदि भावयामः ।

अन्यानि शास्त्राणि पराणि लोके
तिष्ठन्तु तावद् विबुधेषु भूभृत् ! ॥४५॥

अभेदभावेन शिवं विभिन्नं
केचित्तु जीवं शिवतत्त्वमंशम् ।
वदन्ति चैतन्यमितं शरीरे
भिन्नानि शास्त्राणि विभान्ति लोके ॥४६॥

इयं तु तावच्छिवदर्शनानां
मतिः कथञ्चित् कथिता मया ते ।
पुराणवर्गेषु च 'नामरूपे'
मूलं स्वरूपं कथितं विचित्रम् ॥४७॥

पुराणवर्गे प्रथिताश्च देवा
देव्योऽथवा ताः सममेव भूप ! ।
देवं च देवीमथवा कथञ्चित्
तमेव तां वा मनसा प्रयाहि ॥४८॥

ध्यानेन भक्त्यापि सहैव माया-
माराधय त्वं त्वमपोह वैश्य !
ध्रुवं च तस्माद् युवयोः सदाशा
प्रपूर्णतां यास्यति नान्यथा स्यात् ॥४९॥

इयं हि शिष्टैः कथिता सुरीति-
र्ययैव सिद्धिं प्रतियान्ति सिद्धाः ।

तत्रापि तत्त्वं सममेव रच
सद्ब्रह्मभावो यत एव सर्वम् ॥५०॥

शिवस्य शक्तिर्गिरिजा भवानी
प्रगीयते सैव विचित्ररूपा ।
विष्णोश्च शक्तिः कमलैव साक्षा-
ल्लक्ष्मीस्वरूपा नृपभावसेव्या ॥५१॥

धातुश्च शक्तिर्मतिगीः स्वरूपा
सरस्वतीयं कथितैव तज्ज्ञैः ।
एकापि शक्तिर्भुवि सर्वदात्री
निर्विण्णचेतास्तु प्रयाहि तां त्वम् ॥५२॥

फलिष्यति द्राग् युवयोः सदाशा
ध्रुवं च तस्याः करुणाकटाक्षैः ।
तामेव शुद्धां मनसा प्रयाहि
कामेशपत्नीं विविधस्वरूपाम् ॥५३॥

राज्यच्युतस्त्वं नृपसिंह वीर !
क्षिप्रं भजस्व प्रणिधानचेताः ।
विश्वेशशक्तिं भवशक्तिरूपां
वैश्य ! त्वमप्येवमिमां भजस्व ॥५४॥

ज्ञानी समाधे ! ध्रुवमेव लोके
भविष्यसीतीह मया सदाशीः ।

प्रदीपते चेद् भजसे त्वमम्बा-
मनन्यचित्तः शरणं प्रपन्नः ॥५५॥

त्वां ज्ञानिनं ते गृहकेतवस्ते
यास्यन्ति सर्वे शरणं प्रपन्नाः ।
त्वद्भावनिष्ठा निजकृत्यभीताः
शक्तेः प्रसादात् करुणालयायाः ॥५६॥

वर्षत्रयेणैव समस्तकामः
सम्पत्स्यते शक्तिसदर्च्चनायाः ।
तावत् प्रशान्तिः सहसैव भूयाद्
यामेव चित्तस्य तथानुकूल्यम् ॥५७॥

त्वामेव तत्त्वं कथयामि राजन् !
निबोध तावन्मनसा वचो मे ।
कथं च दुःखं भवतापि भुक्तं
ध्रुवं भवन्तः किल कर्मनिष्ठाः ॥५८॥

निष्कामकर्मेह कृतं च पापं
लोकेषु हन्ति प्रथितं यथावत् ।
प्रारब्धकर्मेह च हन्यते तद्
भक्त्यैव बोधेन परेण वापि ॥५९॥

इष्टानि लोके सकलानि भूप !
यावन्ति कर्माणि भवत्कृतानि ।

प्रारब्धभागो भवतापि भुक्तः
सद्यस्तु तामेव भजस्व शक्तिम् ॥६०॥

वर्षत्रयं यद् युवयोस्तु शिष्टं
तदेव नेयं च कथं-कथञ्चित् ।
तपोभिरुग्रैरतिभक्तिनिष्ठै-
र्भवद्भिरेवेह नदीतटेषु ॥६१॥

नियमयति च विश्वं विश्वशक्तिश्च येयं
मदयति च मदेन ब्रह्मशक्तिस्वरूपा ।
अवतु भवलता सा वां च शक्तिप्रपन्नौ
प्रकृतिरतिगुणाढ्या चित्कलाभिः समन्तात् ॥६२॥

इति श्रीक्षेमधारिसिंहशर्मविरचिते सुरथचरिते महाकाव्ये
नमविज्ञाकोपदेशो नाम दशमः सर्गः ॥



## एकादशः सर्गः

नृपश्च वैश्यो बहुधा प्रबोधं
प्राप्यापि तस्माद्धि मुनेर्विशिष्टम् ।
विमूढतां हातुमपारयन्तौ
पप्रच्छतुस्तौ मुनिमेव भूयः ॥१॥

यद्दर्शनाख्यो हि सुबोधपुञ्जः
प्रकाशितोऽयं भवता विशिष्टः ।
ततः परं मे वद साम्प्रतं त-
च्छक्तिस्तु यस्माद् भवतीह दृश्या ॥२॥

महात्म्यमेवात्र वद त्वमस्याः
शक्तेर्यतः स्याद्धृदये सुभक्तिः ।
श्रद्धा परा वा भवचक्रमध्ये
तदीयकृत्यैरुदियादजस्रम् ॥३॥

मुनिश्च मेधा॰ पुनरेव देव्या
माहात्म्यमेवात्र परं यथावत् ।
संक्षेपतस्तच्चरिताश्रितं हि
वक्ति प्रसन्नः सद्योऽथ भावात् ॥४॥

आदौ तदेव प्रवदामि राजन् !
बली रिपुर्यत् भवतः श्रियं ताम् ।

जहार देवीचरणप्रसादा-
च्छारदसेवाफलमेव तद्धि ॥५॥

पुनश्च लक्ष्मीस्तव सेवया सा
ध्रुवं समेष्यत्यरिनाशकर्त्री ।
यथैव साक्षाद्रिपुभद्रकाली
रामे प्रसन्ना च दशाननघ्नी ॥६॥

न रावणात् कोऽपि च साधकः स्या-
द्देवीपदाब्जस्य च भक्तभृङ्गः ।
स्वकीय भक्त्याश्रयणेन राम-
स्तमेव साक्षात् समृधे जघान ॥७॥

विभीषणोऽसौ भुवि रामभक्त्या
लेभे च राज्यं सहजस्य तस्मात् ।
सेव्यं प्रपन्नो हि तमेव वीरः
सर्वं तदेतच्चरणाद्धि देव्याः ॥८॥

यद्धार्त्तराष्ट्राश्च मृधे प्रवीरा
निपातितास्ते नृपभावनिष्ठाः ।
तत्रापि कृष्णस्य कृपाप्रभामि-
र्देव्याः कटाक्षः सकलस्तु हेतुः ॥९॥

प्रद्युम्नबालश्च सुरारिमुख्यं
तं शम्बरं वा निजघान दक्षम् ।

वीरं च देवीवरभावशक्त्या
तत्रापि हेतुः पुनरेव दुर्गा ॥१०॥

युगप्रवाहेण च कल्पभेदै-
र्वार्ता विचित्रा भुवि लभ्यते सा ।
क्रमेण वापि क्रमभावभिन्ना
यथा यथेदं प्रतियाति चक्रम् ॥११॥

बलिर्वबन्धे हरिणा यतोऽसौ
जह्रेऽमृतं चापि पयोनिधिभ्यः ।
धृता च पृथ्वी परमापि तेन
तत्रापि हेतुस्तु सदैव शक्तिः ॥१२॥

एकार्णवे यां मनसा वचोभि-
र्नत प्रपन्नो विधिरेव साक्षात् ।
हरेः प्रबोधाय च मोहरूपां
पृथ्वीफलं वापि च यत्कृपायाः ॥१३॥

सैवेह वन्द्या भवता, त्वयापि
नृपाल ! वैश्य ! प्रथिता जगत्याम् ।
सा मेदिनी चासुरयोरथैनं
सुमेदसा भाति यथैव पृथ्वी ॥१४॥

यदैव लोको महिषेण साक्षात्
प्रपीड़ितोऽयं दितिजेन तेन ।

तदा सुराणां सकलैव शक्ति-
र्व्यक्ता जयश्रीर्विजयस्वरूपा ॥१५॥

सा रक्तबीजं निजघान शक्ति-
र्भिन्नस्वरूपा विविधामराणाम् ।
प्रकृत्यभेदा विविधस्वरूपा
शस्त्रास्त्रभेदैः प्रविकाशमेति ॥१६॥

तद्रक्तविन्दुः पतितो हि भूमा-
वुत्पादयन्सोऽपि समानशक्तीः ।
अशेषसंख्याभिरथासुराणा-
माच्छादयत्येव भुवं विचित्रः ॥१७॥

एकैव शक्तिर्महसा तु लोके
गता हि भिन्नत्वमियं स्वशक्त्या ।
तस्मात् स्वशक्तिः प्रतिभाति शक्ते-
रादूयैव शक्तिर्भुवनस्य तत्त्वम् ॥१८॥

अष्टाभिरेषा निजघान काली
तं रक्तबीजं किल शक्तिभिः सा ।
स्वयं तु पर्णोपमजिह्वयैव
लिलेह बिन्दून् ग्रसनप्रवृत्ता ॥१९॥

तत्रापि शुम्भः स हि दैत्यराजो
निराश्रयः खे युयुधे च देव्या ।

अन्ते तथायं निहितः करालः
शक्त्या विचित्रः किल दैत्यकेतुः ॥२०॥

हते सुरारौ महिषे च देव्या
वृन्दारकैः सा प्रतिपूजिता तैः ।
शक्रादिभिर्दैत्यबले च लोके
दिव्यैः सुपुष्पैरपि गन्धतन्त्रैः ॥२१॥

नता तथा सा सुरतापि भक्त्या
तामादिशक्तिं प्रणिधानभावैः ।
पुनश्च तस्या वरलाभमेषा
चकार लोकेषु हिताय तेषाम् ॥२२॥

रामावतारेऽपि च सैव शक्ति-
श्चित्रां क्रियां सा भुवि दर्शयन्ती ।
कलाभिरेषा भरतस्य मात्रा
सीताविवासेन सहैव राजन् ॥२३॥

सीता स्वयं सा भुवनस्य धात्री
समागता रामगृहे च लक्ष्मीः ।
आद्यैव शक्तिर्भवरक्षणाय
जाता पृथिव्या जनकस्य कन्या ॥२४॥

मायैव साक्षात् क्रियया विभाति
लोकेषु धात्री भुवनप्रसिद्धा

कलासहस्रेण सहात्र सीता
प्रयोषिता वा जनकेन चित्रा ॥२५॥

उच्छूनवाहुं दनुजेश्वरं तं
सहस्रवाहुं निजघान चोग्रा ।
सीता करालाननघोररूपा
पातालभूपं किल हेतिभिः सा ॥२६॥

ततोऽपि पूर्वं दितिजेन तेन
हतं स्वनाथं सहसा ददर्श ।
अजेयभूपं च मृधे शयानं
पराजितं तं जनकस्य पुत्री ॥२७॥

विभीषणादीन् सुहृदो रघूणां
हतांश्च तेनैव मृधे शयानान् ।
दैत्येन घोरेण च शक्तिहीनान्
सद्यः सुराणां पुरतो ददर्श ॥२८॥

ततः सुरारौ निहतेऽतिघोरे
धाता स्वयं तं नृपतीश्वरं सः ।
सञ्जीवयामास रघुप्रवीर-
माश्वासभावैर्विविधैर्वचोभिः ॥२९॥

ततश्च भक्त्या हरि-रामभूप-
स्तुष्टाव साक्षाद् विधिचोदितोऽयम् ।

नाम्ना सहस्रेण च विश्ववन्द्यां
प्रकृत्यभेदां जनकात्मजां ताम् ॥३०॥

तथापि नेयं विविधाऽपि रामाद्
विभिन्नरूपेण कदापि मान्या।
परा च शक्तिर्ध्रुवमेव तत्त्वं
विभाति भिन्ना न च शक्तिमत्तः[1] ॥३१॥

दक्षस्य पुत्री शिवभावनिष्ठा
दग्धैव वह्नौ पतिनिन्दया सा।
क्रुधो[2]ऽपि भावादथवा विशेषा-
दुमेति नाम्ना नगजा सती वा ॥३२॥

कृष्णस्य माया परमैव शक्तिः
काचिच्च लोके प्रथिताऽप्यदृश्या।
दृश्या च राधा पुरगोपजाता
रासेश्वरी या शरदः प्रभैव ॥३३॥

कर्पूरवर्णामथवापि मायां
संप्रोड़ितां तां च वधूस्वरूपाम्।
सत्त्वप्रधानां च रजःप्रधानां
भजस्व काञ्चित्त्वमथाविभिन्नाम् ॥३४॥

---

१ शक्तिमत्+तस्।
२ क्रुधः=क्रोधात्।

किं वापि काञ्चित् सकलैः गुणोघै-
नित्यप्रपञ्चां सकलीकृतां वा ।
प्रभेदभेदैरपि मीलितां तां
जयत्वमन्तर्विमर्वां प्रकाशम् ॥२५॥

तां मङ्गलेशीं श्रुतिमूलरूपा-
माराधय त्वं द्विजमात्रसेव्याम् ।
क्वचित् सवर्णां क्वचिदप्यवर्णां
ध्येयां च नाम्ना मनसाऽथवा ताम् ॥२६॥

तपोभिरुग्रैरथवापि यज्ञैः
कर्मस्वरूपां प्रकृतिं परां ताम् ।
भजस्व शक्तिं परमां विचित्रां
स्वान्तः कलां केलिपरां च सद्यः ॥२७॥

भवरतिविजयान्तः प्रीतिमेषा दधाना
भवरतिरमसेन प्रेमभावं च हृद्यम् ।
भुवनशतविधात्री लोकमान्याऽपि साद्या-
दवतु सपदि वां सा लोकयात्राप्रवृत्तौ ॥२८॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
देवीमाहात्म्यवर्णनं नामैकादशः सर्गः ॥

---

## द्वादशः सर्गः

समाकर्ण्य वचस्तस्य मुनेस्तौ प्रणतौ तदा ।
उपासनाक्रमेणैव प्रवृत्तौ तपसे दृढा ॥१॥

ग्रीष्ममार्त्तण्डतापेन तापितः सुरथो नहि
भविष्यत्पुत्रवात्सल्यात् तापो नापि हृतस्ततः ॥२॥

बद्धो जटाभिर्भूपोऽसौ संयतस्तपसि स्थितः ।
धराया मेखला चापि संगता मेखला नृपे ॥३॥

दुकूलं स नृपस्त्यक्त्वा वल्कलं कर्कशं वने ।
दधावाच्छादनार्थाय किं पुनर्मुकुटेन च ? ॥४॥

गीतिभिर्मङ्गलैरिष्टैर्बुबुधे योऽरुणोदये ।
स एवेह शिवारावैरुत्थितो निशि वाऽशिवैः ॥५॥

रत्नमाल्येन यो भूपः शोभतेस्म गृहाङ्गणे ।
रुद्राक्षैरत्रिभिद्भिः स शोभते मुनिरूपधृक् ॥६॥

महार्हशयनासीनश्चक्रवर्त्तीति यो नृपः ।
दासीशतदशैरिष्टैर्वेष्टितो माग्यलालितः ॥७॥

परिष्वक्तश्च राज्ञ्यैव प्रासादे चन्द्रचुम्बिते ।
स एव स्थण्डिले शेते दौर्भाग्यपदपीड़ितः ॥८॥ (युग्मकम्)

किं वापि काञ्चित् सकलैः गुणोघै-
नित्यप्रपञ्चां सकलीकृतां वा ।
प्रभेदभेदैरपि मीलितां तां
जयत्वमन्तविभवां प्रकामम् ॥३५॥

तां मङ्गलेशीं श्रुतिमूलरूपा-
माराधाय त्वं द्विजमात्रसेव्याम् ।
क्वचित् सवर्णां क्वचिदप्यवर्णां
ध्येयां च नाम्ना मनसाऽथवा ताम् ॥३६॥

तपोभिरुग्रैरथवापि यज्ञैः
कर्मस्वरूपां प्रकृतिं परां ताम् ।
भजस्व शक्तिं परमां विचित्रां
स्वान्तः कलां केलिपरां च सद्यः ॥३७॥

मररतिविजयान्तः प्रीतिमेषा दधाना
मररतिरभसेन प्रेमभावं च हृद्यम् ।
भुवनशतविधात्री लोकमान्याऽपि साक्षा-
दवतु सपदि वां सा लोकयात्राप्रवृत्ती ॥३८॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
देवीमाहात्म्यवर्णनं नामैकादश सर्गः ॥

## द्वादशः सर्गः

समाकर्ण्य वचस्तस्य मुनेस्तौ प्रणतौ तदा ।
उपासनाक्रमेणैव प्रवृत्तौ तपसे हृदा ॥१॥

ग्रीष्ममार्त्तण्डतापेन तापितः सुरथो नहि
भविष्यत्पुत्रवात्सल्यात् तापो नापि हृतस्ततः ॥२॥

बद्धो जटाभिर्भूपोऽसौ संयतस्तपसि स्थितः ।
धराया मेखला चापि संगता मेखला नृपे ॥३॥

दुकूलं स नृपस्त्यक्त्वा वल्कलं कर्कशं वने ।
दधावाच्छादनार्थाय किं पुनर्मुकुटेन च ? ॥४॥

गीतिभिर्मङ्गलैरिष्टैर्बुबुधे योऽरुणोदये ।
स एवेह शिवारावैरुत्थितो निशि वाऽशिवैः ॥५॥

रत्नमाल्येन यो भूपः शोभतेस्म गृहाङ्गणे ।
रुद्राक्षैरक्षिभिद्भिः स शोभते मुनिरूपधृक् ॥६॥

महार्हशयनासीनश्चक्रवर्तीति यो नृपः ।
दासीशतदशैरिष्टैर्वेष्टितो भाग्यलालितः ॥७॥

परिष्वक्तश्च राज्यैव प्रासादे चन्द्रचुम्बिते ।
स एव स्थण्डिले शेते दौर्भाग्यपदपीडितः ॥८॥ (युग्मकम्)

मृगाणां भृङ्गकीटानां कण्डूत्यैव पुनः पुनः ।
उत्थापितो न मात्यत्र श्रियोज्झित इवेश्वरः ॥६॥

छत्रं शशिप्रभं त्यक्त्वा तस्य श्रीर्भाति मूर्द्धजा ।
जटाबद्धैव सा भाति तपसां विभवक्षयात् ॥१०॥

पदत्याणमियापीन्द्रो धाराभिर्बहुधा वने ।
नृपमाच्छादयत्येनं हेमन्ते शिशिरेऽपि वा ॥११॥

किं पुनः प्रावृषां योगे ग्रीष्मे वापि शरत्स्वपि ।
मघोनः शात्रवेनैव वातास्ते दुर्दमास्तथा ॥१२॥

कथं कथं चिद् भानुश्च तीक्ष्णदीधितिभिर्वने ।
बलं जिज्ञासमानो हि सुरथस्य तपस्तथा ॥१३॥

समाधिश्च तपोमग्नो भूपसामीप्यकारणात् ।
अन्तः प्रांदिकलाभिश्च भूपमेवानुगच्छति ॥१४॥

नदीतटी तु मातेव पश्यत्येतौ सुसंयतौ ।
पयसा चापि तौ काले सम्पोषयति वत्सला ॥१५॥

उमायाश्च तपश्चर्या सुरथेऽपि प्रदृश्यते ।
आराध्यस्य गुणाः प्रायो जायन्ते सेवकादिषु ॥१६॥

क्वचित्काले सपर्यादि सबाह्याभ्यन्तरक्रमैः ।
क्रियते मनसा वाचा भक्तिसंक्रान्तचेतसा ॥१७॥

हृत्पद्ममासनं स्निग्धं स्वागतं वाक्यमेव तद् ।
मनः पाद्यं तथैवार्घ्यं सत्यमाचमनीयकम् ॥१८॥

स्नानीयं सततं शुद्धं सहस्रारच्युतामृतम् ।
गुप्तिभावश्च वसनं भूषणं भावकल्पितम् ॥१९॥

रागास्तु भालमिन्दूरं कुङ्कुमं वासनादिकम् ।
श्रीपत्रं बिल्वपत्रं च गन्धोगन्धः प्रियस्तथा ॥२०॥

धूपपात्रं च दौर्भाग्यं किल्विषं धूप एव हि ।
अन्तर्दीपश्च दीपोऽसौ सस्नेहं बुद्धिवर्त्तिका ॥२१॥

यावद्दुःखं सुनैवेद्यं जीवनं च जलं परम् ।
ताम्बूलं त्रिगुणं मिश्रं कर्म पुष्पाञ्जलिस्तथा ॥२२॥

यावद्द्रव्यं फलोपेतं दर्शनीयश्च पादयोः ।
जपः श्वासो वहन्नित्यं मनसैव समर्पणम् ॥२३॥

मंन्नित् सुरा मनः शुद्धिः शुद्धिस्तद्योगजा तथा ।
तर्पणं भक्तिकृत्यं च विपाकाः पशवो बलिः ॥२४॥

वृत्तिर्वह्नि 'रहं' हव्यं 'मेखला' चेतना तथा ।
हवनं संयमस्तेन क्रियते सुरथेन तत् ॥२५॥

सार्था वाचः स्तुतिस्तस्य चित्ते तत्करणे तथा ।
अनाहतध्वनिर्घण्टा हृदब्जे वाद्यते रहः ॥२६॥

तेजो नीराजनं दीप्तं भक्तिविद्युत्सुवर्त्तिका ।
उद्वासनं मनो दार्ढ्यं मन्यते चार्चनक्रमे ॥२७॥

क्वचिद्रविः क्वचिच्चन्द्रः क्वचिद्वातोऽपि वा पचिः ।
मन्यते सुरथं भूपं पुत्रकं प्रीतिजातकम् ॥२८॥

समाधिरपि पुण्यात्मा कथंचिच्चानुवर्त्तते ।
भूपालं श्रद्धया खिन्नस्तमेव विवशो वशी ॥२९॥

एतस्मिन्नन्तरे विप्रश्चेजः कश्चित्परो मुनिः ।
भोज्यादिभिश्च तौ वीरौ जिज्ञासुस्तपसागतः ॥३०॥

व्रतिनौ तौ भिया तस्य तपसो नो निवारितौ ।
आदित्सू तस्य सत्कारं देवीपादाब्जषट्पदौ ॥३१॥

यताहारौ निराहारौ क्वचिद्वापि फलाशिनौ ।
निर्विण्णौ मनसा शुद्धौ दिव्यभावपरौ च तौ ॥३२॥

राजाऽसौ च क्वचिद्राज्यं स्मरन् देवीपदे रतः ।
सोऽपि वैश्यः क्वचित्पुत्रं पत्नीं वा स्मरति क्षणम् ॥३३॥

क्रमेणापि तयोर्भक्तिर्वृद्धिं याति परां शुभा ।
समाधिस्तु तयोर्नित्यं जिहासति गृहं नहि ॥३४॥

तयोः शान्तिः क्रमेणापि समीपमुपसर्पति ।
वात्सल्येन यथा माता मन्दनेन शिशुं सदा ॥३५॥

त्रिभिर्वर्षैस्तयोर्भक्त्या जगदम्बाकृपार्णवा ।
प्रत्यक्षाऽभूत् तपोभिः सा यथा मेघः सुवायुना ॥३६॥

तत्त्वं किमपि प्रत्यक्षं पश्यतस्तौ विलक्षणम् ।
न बाह्यचक्षुषा दृश्यं विना तत्कृपया क्वचित् ॥३७॥

न ज्ञानचक्षुषा वापि क्वचिद्दृश्यं परं च तत् ।
तदैवाङ्गैस्तु विस्पष्टं देवीरूपेण दृश्यते ॥३८॥

स्थूलपार्थिवतत्त्वेन सञ्जाता दामिनी यदि ।
किमाश्चर्यन्तु तद्दृश्यं यतो गौरी नगात्मजा ॥३९॥

सहस्ररवितेजोभिर्लक्षणैः सा च युज्यते ।
चन्द्रायुतामृतेनापि निर्मितेव विराजते ॥४०॥

यत्पादपद्मभृङ्गास्ते त्रिदशा विबुधा अपि ।
पीयूषाच्चापि भक्तास्ते निवृत्ता मुक्तिलिप्सया ॥४१॥

प्राञ्जलिः पुरतो भूपः प्रपन्नः प्रणतस्तथा ।
उवाचात्मगतं वाक्यं भिया भक्त्या च संयतः ॥४२॥

अपि किं भवती मातः सैषा यः सेव्यते मया ।
अन्तरम्भोजसञ्जाता जननी जगतां तथा ॥४३॥

इत्याकर्ण्य वचस्तस्य भूभृतो जननी परा ।
प्रोवाच वाग्भिरिष्टाभिर्मेघगम्भीरया गिरा ॥४४॥

अन्तःकरणतत्त्वं तद् यत्त्वया ध्यायते परम् ।
भावनाकल्पितामूर्त्तिर्या त्वया पूज्यते शुभा ॥४५॥

चिच्छक्तिर्या त्वया भूप पूज्यते विश्वकारणम् ।
विश्वशक्तिः परा सैव दृश्यते रूपधारिणी ॥४६॥

मुनेरादेशकार्यस्य कार्यमेतद् विलक्षणम् ।
दर्शनं मे त्वया लब्धं कृतं भक्तिकृतं स्वयम् ॥४७॥

ईप्सितं च वरं मत्तो वृणुध्वेह पृथक्-पृथक् ।
तमहं वां प्रदास्यामि भक्तिभावप्रसादजम् ॥४८॥

प्रसादसूचकं वाक्यं श्रुत्वा देव्याश्च तौ पुनः ।
ऊचतुः परमप्रीतौ भक्तिनम्रात्मकन्धरौ ॥४९॥

मातः किं कथ्यतां विश्वसाक्षिणी त्वं यतः श्रुता ।
मनःप्रसादं आवाभ्यां याच्यते प्रवरो वरः ॥५०॥

नृप ! लभस्व पुना रिपुतो जयं
श्रियमपीह महः प्रियसंयुतम् ।
सपदि तज्ज्वलिताननमीप्सितं
शुभलसद् भुवि धेहि परं बलम् ॥५१॥

चिरमथात्र सुखं मनसा वरं
जगति भुङ्क्ष्व गृही च गृहोद्भवम् ।
तत इनाच्च जनिं लभतां तथा
मनुरिहैव तथा भविताऽष्टमः ॥५२॥



दत्वा वरांश्च जननी भवभावगम्या
श्यामाभ्ररूपललिता लसिता कलाभिः ।
प्रारब्धकिल्बिषतृणं नयनानलेन
दग्ध्वा गता नयनयोर्विलयं तयोः सा ॥

त्वमपि वैश्य ! वरं लभतां प्रियं
निजकुलोद्भवभावभरैर्गृहे ।
निजजनैः ससुतैः प्रतिपूजितो
जगति जीवनमुक्तपदस्थितः ॥५३॥

दत्वा वरांश्च जननी भवभावगम्या
श्यामाभ्ररूपललिता लसिता कृपाभिः ।
प्रारब्धकिल्बिषतृणं नयनानलेन
दग्ध्वा गता नयनयोरविषयं तयोः सा ॥५४॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
वरप्रदा नाम द्वादशः सर्गः ॥



## त्रयोदशः सर्गः

स चक्रवर्ती सुरथः प्रतिष्ठो
लब्ध्वा विचित्रं वरयुग्मकं तम् ।
विश्रम्भभावं स दधे प्रसभं
यदीप्सितं "तद्विद्धगुणो कृतं हि" ॥१॥

देवस्य कोपाद् यदि दण्डकूपे
निपातनं स्याद् अविभीषणाय ।
कृपामृतानां च नदीनदानां
लभ्यो न वाऽसौ कथमेव योगः ॥२॥

यत्क्रोधदावानलजातकं तद्
विपत्त्रिशूलं विनिपातितं स्यात् ।
तस्यैव कारुण्यभरप्रभावैः
कथं न सम्पत् पुनरेव लभ्या ॥३॥

वैश्योऽपि देव्याः परमं वरं तं
लब्ध्वाऽऽशु हृद्यं मनसा प्रपन्नः ।
श्रेयः परं स्वं सहसाऽनुमेने
प्रेयः स्वरूपं भवदुर्लभं तत् ॥४॥

सद्यः पुनस्तौ मुनिमेव शुद्धं
नतौ प्रपन्नौ वरभावभव्यौ ।

स चापि चक्षुः करुणार्द्रभावं
क्षिपत्यजस्रं फलभावितं तत् ॥५॥

नताञ्जली तौ सदयं विशुद्धं
ब्रूतो मुनिं तं फलितौ वचोऽदः ।
भवत्पदार्कस्य करप्रभावात्
प्रफुल्लितं तन्नलिनं च सान्द्रम् ॥६॥

विकासभावं गमितं च देव्याः
साध्यस्वरूपं हृदयं परं नौ ।
"उच्चैः प्रभावेण फलं दधानं
गुरौ गुरुत्वेन विभाति तेजः" ॥७॥

श्रुत्वेदमुच्चैर्वचनं तयोः स
सत्यं प्रियं तत् प्रतिवक्ति साधुः ।
विश्वासकार्यं तदिदं समस्तं
शुद्धं प्रभावाद् युवयोर्वरो वा ॥८॥

गुणा गुरूणां ध्रुवमेव लोके
फलाय तावन्नतशिष्यहेतोः ।
भवन्ति सेवाकृतिभिर्विशुद्धाः
शिष्यस्य भक्त्या विनयेन वापि ॥९॥

वरौ युवाभ्यां ध्रुवमेव लब्धौ
कृपाप्रसूतौ जगदम्बिकायाः ।

अतः परं तच्छृणु नीतितत्त्वं
सद्यः प्रयत्नेन हृदास्ति धार्य्यम् ॥१०॥

नीतिस्तु राज्ञां जननीव भावै-
रिष्टा पयोभिः कुरुते प्रपोषम् ।
कल्याणतत्त्वैर्हृदयप्रभावै-
रपीह लोकान् सकलान् प्रशास्ति ॥११॥

नीतेश्च तत्त्वं हि रहस्यभावो
भाव्यः सदैवं भवतो गुणाढ्यः ।
स्वकीयलाभो रिपुपीडनं वा
श्रेयः प्रधानं सततं हिताय ॥१२॥

श्रेयःप्रधाना नहि सर्व एव
क्रिया च कार्या क्वचिदेव लोके ।
हिताहितानां शुभभावनाभि-
र्विचारणीयं सकलं च कृत्यम् ॥१३॥

यथैव गर्भो मृदुरर्भकश्च
परोक्षभावेन सदैव रक्ष्यः ।
विशेषमन्त्रोऽपि च तावदेव
तथैव गोप्यो न फलं च यावत् ॥१४॥

सत्यं न वाच्यं मधुभावभिन्नं
न च प्रियं सत्यगताद् विभिन्नम् ।

अतो युगस्यापि समन्वयत्वात्
सदैव वाच्यं मितमेव वाक्यम् ॥१५॥

रिपोः शरणामभिघातभावो
यथैव सद्यो भवतीह राज्ञा ।
तथैव वाच्यं प्रियभावमित्थं
लोकस्य सद्यं शुभरक्षणाय ॥१६॥

प्राप्तेषु कालेषु यथैव भूपै-
राच्छादनीया रिपवोऽभिघातैः ।
तथैव काले स्वहिताय ताव-
ल्लब्धाभिघातस्य निकृन्तनं स्यात् ॥१७॥

मित्रत्वमेवं क्वचिदेव धार्य्यं
हृद्यं हितं वा हितलक्षणं वा ।
बन्धुप्रधानं च हितप्रधानं
क्वचित् क्वचिद् वा भवतीह मित्रम् ॥१८॥

चरित्रभावेन तथापि वश्या
नराः प्रकामं जगतीह रक्ष्याः ।
प्रायेण शिष्टा हितमात्रपुष्टा
भवन्ति लोके मधुभाववश्याः ॥१९॥

आयुः स्वकीयं प्रविभज्य विद्वान्
कामाय चार्थाय च पुण्यकृत्यै ।

क्रमेण दद्यात् स्वहिताय धीमा-
श्चेषं तु कालं गमयन् स्वबुद्ध्या ॥२०॥

अर्थस्य रक्षां प्रतिकुर्वतश्च
राज्ञः स्वधर्मस्य च रक्षणं स्यात् ।
वणिग्जनस्यापि च कृत्यमेवं
कर्त्तव्यभावे जगतीह सिद्धम् ॥२१॥

तथापि सर्वत्र जगद्धितेशीं
विश्वेश्वरीं तां सततं स्मरेयुः ।
नृपाः प्रबुद्धा अपि बुद्धिमन्तो
जना यतोऽतः सफलः प्रपञ्चः ॥२२॥

सदर्थचिन्तां पदभावनां च
करोति भूपो निशि चेष्टकामम् ।
कविर्यथाऽसौ निजभावभव्या
मतो भवे तौ प्रथितौ प्रशान्तौ ॥२३॥

जयन्ति भूपाः सुधियाऽरिपुञ्जान्
दुराग्रहेणापि न मित्रवर्गान् ।
अतो धिया ते सुधियो भजन्ते
सुखानि दुःखानि च कालवश्याः ॥२४॥

न निर्णयं ते निजरागमार्गैः
कुर्य्युः कदापि प्रथिता अपीशाः ।

विशुद्धभावेन सदैव भूपा
न्यूयुर्यथार्थं स्वरभावनिष्ठाः ॥२५॥

सत्यप्रकाशः सुरभावकार्य-
मसत्यभावोऽसुरतत्त्वजातः ।
अतो नृपाणामुभयं च तत्त्वं
सुरासुराणां हि यथाक्रमेण ॥२६॥

अमात्यवर्गेषु सदैव कार्यं
क्षिपेयुरीशाश्च यशः प्रवृत्ताः ।
राष्ट्रप्रजाभ्यो निजमन्त्रिणस्ते
भूपा लभेरन् बहुधैव शिष्टाः ॥२७॥

स्वचेतनां तां निजमन्त्रिवर्गे
क्षिपेयुरीशा नृपकार्यदक्षे ।
यतः प्रजा वा प्रकृतिश्च साक्षात्
स्वयं त्वशक्तः समयेषु तिष्ठेत् ॥२८॥

रहस्यभावं तु सदैव रक्षेद्
यानत्र मन्त्री नृपभावतत्त्वम् ।
जिज्ञासमानो नृपमेव पृच्छेत्
तथानुकूल्यं नहि धारयेद्वा ॥२९॥

कालेन नित्यं प्रतिचोदितोऽसौ
मोहं न धत्तां हि गृहे गृहस्थः ।

कालस्य वश्यः स गृही सदैव
मेघो यथा वा प्रतियाति वातैः ॥३०॥

स्वबन्धुवर्गस्य सदैव भावः
सदा सुभाव्यो गृहमेधिना वा ।
गुणास्तथा तेषु न दोषभागा
विश्रम्भभावाय भवन्ति हेतुः ॥३१॥

बालेषु बालासु च वृद्धवर्गे
विशेषमाधुर्यमथोऽतिरुग्णे ।
वाक्ये च नित्यं करणीयमेव
यतो न तेषां सहनं कदापि ॥३२॥

द्रव्यस्य मूल्यं नहि शुद्धमेव
जीवोपकाराय सदैव मूल्यम् ।
अन्नादिभोग्येन समस्तमूल्यं
निर्णीयते कालवशप्रयातम् ॥३३॥

रसायनानामिव भोगतत्त्वं
भूपस्य राज्यस्य गृहस्य वापि ।
शनैः शनैरेव विभाति लोके
"व्यक्तानि भोग्यानि सदैव काले" ॥३४॥

न सन्धिबद्धस्य न दिव्यभावै-
र्बद्धस्य तावच्छपथेन वापि ।

विश्वासभावो हि नृपेण कार्यः
स्वार्थेन बद्धं हि जगत् सदैव ॥३५॥

अनित्यभावो न विचारणीयो
ज्ञानप्रदीपेन भवप्रपञ्चे ।
परिस्थितिर्भाति यथैव लोके
जनेन तत्त्वं च तथैव धार्यम् ॥३६॥

विश्वासपीठः सुरतैव मान्या
गुरुश्च मान्यो सुहृदोऽपि मान्याः ।
तेष्वेव भक्त्या प्रणयेन चापि
कार्याणि सर्वत्र भवन्ति लोके ॥३७॥

क्व राजनीतिर्गहना दुरापा
वयं क्व वृत्त्या सरला विशुद्धाः ।
तथैव शक्त्या प्रतिचोदिता वा
वयं च साक्षाद् विषयं वदामः ॥३८॥

प्रियानुरोधं नहि धारयन्ति
हितं ब्रुवन्तो नियमेन सन्तः ।
युष्मद्धितार्थं तु तथापि नीतिं
ब्रुवाणमेवं सहसा सहस्व ॥३९॥

इह जगति न कामाल्लम्पटानीन्द्रियाणि
विषयरतिवरस्त्रीभाववश्यानि वा स्युः ।

अनिशमपि तथान्तः शक्तिमान् व्यापृतः स्या-
न्निजकृतिषु विवश्यः सद्धिया कार्यपट्टे ॥४०॥

विजयरविरुदारो नित्यमेवेह युष्मान्
विविधशुभमयूखैः सौम्यभावैस्तथाऽव्यात् ।
सुखनिकरकरश्रीः सा च शारधभावा
पुनरपि ललिताङ्गैरेतु युष्मान् कलाभिः ॥४१॥

इति श्रीक्षेमधारीसिंहशर्मरचिते महाकाव्ये
नीतिप्रकरणो नाम त्रयोदशः सर्गः ।



## चतुर्दशः सर्गः

सा विप्रलब्धा सुरथस्य पत्नी
राज्ञी च कालेन वियुक्तकान्ता ।
मुहुर्मुहुर्भावभरेण मोहाद्
भूपं स्वकान्तं सततं स्मरन्ती ॥१॥

स्वकीयकान्तं न विवेद भूपं
वरप्रसादान् मनसापि तुष्टम् ।
अतश्च चन्द्रं कुसुमायुधं सा
रहस्युपालब्धवती विखिन्ना ॥२॥

दिने दिने त्वं विविधं स्वरूपं
धत्से न चैकेन कदापि धृष्टः ।
रूपेण भासि प्रभया मनोज्ञो
यतो वधूनां रिपुभावदर्शी ॥३॥

आशंससे किं मनसा प्रकामं
त्वदीयबिम्बे प्रमितापि काचित् ।
इयं न मुग्धा प्रतियास्यतीति
मुग्धा विरक्ता नभसि प्रभावैः ॥४॥

साहं स्वभावात् प्रणिधानभावा
तमेव लोकं रविमण्डलं तम् ।

यास्यामि यस्मिन्निजकर्मबन्धाद्
गतः पतिर्मे तपसः प्रभावात् ॥५॥

चन्द्रो न कश्चिद् विधुलोकयात्री
कान्ता न वा तस्य कदापि काम्या ।
प्रयाति पीयूषमयं च देवं
यतो न वीरप्रसवा हि चान्द्री ॥६॥

स आशुतोषो ध्रुवमेव शम्भु-
र्विधुं यतोऽसौ शिरसैव धत्ते ।
रामाभिहन्तारमपि प्रसादाद्
भक्त्या तथा वा प्रणयेन वापि ॥७॥

मुहुर्मुहुर्ग्रासगतोऽपि तस्य
राहोर्न नाशं किल श्राप एषः ।
किं वा व्यलीकं मम तस्य वा स्याद्
वियुक्तभावाश्च वयं विशेषाः ॥८॥

अमैव माता मम चन्द्रहन्त्री
भूयात्तथा सा पुनरेव लोके ।
कदापि चन्द्रो नहि मानरूपः
समेतु सद्यो रतिलम्पटोऽसौ ॥९॥

किं चन्द्रकान्तोऽपि मणिर्विचित्रः
स्याद्यत्र कारुण्यरसप्रधानाः ।

भावाश्च चन्द्रस्य भवन्ति दृश्या
हृद्यास्तथा वा भुविभावभव्याः ॥१०॥

श्रियः कथं वा सहजः स चन्द्रः
प्रतिक्षणं यः परिवर्धमानः ।
किं वा स्वयं श्रीः सकलैव लोला
धत्ते च शोभाकलिकां कथञ्चित् ॥११॥

पयोनिधिर्नो जनिहेतुरत्र
क्षुद्रत्वमुच्चैश्च यतो विभाति ।
रत्नानि तावत् सहजानि तस्मा-
दुत्पादितानि प्रथितानि लोके ॥१२॥

रत्नानि वा तानि जड़ानि लोके
दृश्यानि भव्यानि न भावयन्ति ।
विना मणिं तं किल चन्द्रकान्तं
यस्मिन् गुणा वा प्रतिभान्ति चन्द्रात् ॥१३॥

प्रक्षीयमाणोऽपि स गीलितोऽपि
तमोभिरुग्रैर्बहुधा विलीनः ।
तथापि नव्यः समुदेति लोके
पीयूषराशिर्यत एष साक्षात् ॥१४॥

त्वामेव पश्यन् मकरालयोऽपि
तरङ्गहस्तैरुपगूहतीव ।

प्रफुल्लितश्रोत्तरली स सिन्धुः
पुत्राद् विशेषो नहि कश्चिदन्यः ॥१५॥

दशाश्व एष ग्रहनेमिरेष
मृगाङ्क एष त्वमसीह चन्द्रः ।
पीयूषनाथो द्विजराज एष
शशी सुधांशुः स विधुस्तथापि ॥१६॥

स पुष्पधन्वा रतिकामुकोऽसौ
त्वामेव लब्ध्वा विरलं च पूर्णम् ।
मनोविकारं कुरुते प्रकामं
नापेक्षते बुद्धिमयं च शक्तिम् ॥१७॥

दग्धोऽपि कामः पुनरेव शम्भुं
बबन्ध भावैर्गिरिजामुखाब्जे ।
गुणैस्तथा लोकहितैः प्रकामं
"भस्मावशेषः कथमेवमुष्णः" ॥१८॥

कृष्णप्रजातः किल कृष्णभाव-
स्त्वं भासि लोके स हि शम्बरारिः ।
रासेश्वरं वापि न योगिराजं
जहौ कदाचिद् पितरं गुणेशम् ॥१९॥

कस्त्वं मनोजः स रतीश एष
यमेव दग्धं प्रसमीक्ष्य रामा ।

साक्षाद्रतिः सापि रुरोद बाष्पै-
स्तथापि शम्भुस्तु रतीशबद्धः ॥२०॥

अर्घैरनेकैः प्रतिभाति चित्रः
कामः स्वयं वा बहुभावरूपः ।
त्वमेव सोऽयं ललनानिहन्ता
धत्से न लज्जा कणिकामथापि ॥२१॥

एकः स चन्द्रो रतिकाममित्रं
स्वयं च कामेन तथापि बद्धः ।
स पातकी वापि विशेषपापी
गुरोर्महत्त्वं नहि वेत्ति मूढः ॥२२॥

एकः स चन्द्रश्च रतिः सकामा
वसन्तराजः किल कश्चिदन्यः ।
समेत्य सर्वे भुवि पातकैस्ते
भुञ्जन्तु राज्यं कलिभाववन्तः ॥२३॥

विशेषभोगैः सततं सुखाप्ता
येयं पुरा राजकुलेषु सेव्या ।
श्रियोज्झिता सा नृपराजपत्नी
विलीयते कामवशा विवश्या ॥२४॥

न चेन्दिरापीह भवाय लोके
क्रीता प्रकृष्टाखिलचिन्तया सा ।

क्षये यतः स्यादखिलैव चिन्ता
मध्ये च मोहाक्रमणं ध्रुवं तत् ॥२५॥

श्रीरेव साक्षात् प्रथितस्य राज्ञः
कीर्त्तिर्यशो वा हृदयप्रशान्तिः ।
राज्ञः किरीटो बहुरत्नवान् वा
मुनेः कृशानुः सफलः सदैव ॥२६॥

स्नुषापि भूपस्य च भूपकन्या
सुखोचिता या सदयं गुरूणाम् ।
स्निग्धा प्रबन्धेन सुलालिता सा
विपद्यते मोहवशेन मुग्धा ॥२७॥

पतिव्रता वा नृपभावभव्या
सुखोचिता वा व्यसनस्थिता वा ।
सदैव कालस्य वशा ध्रुवं सा
प्राग्व्यदासः किल जीवमात्रम् ॥२८॥

शिक्षा मदीया क्व गता प्रभावा
विद्या वरा वा भवबोधकर्त्री ।
सर्वैव बन्ध्या मम, वापि वन्ध्या
सद्योऽहमेषा व्यसनप्रिया सा ॥२९॥

इतीवमात्रं बहुधा विचिन्त्य
प्रिया नृपेशस्य च धर्मबद्धा ।

सुष्वाप भूमौ हृदये नृपेशं
विचिन्तयन्ती व्यसनानि चापि ॥३०॥

सद्यः प्रसुप्तापि ददर्श साक्षात्-
नृपान् बहून् सा बहुभाग्यनिष्ठान् ।
न यत्र हेतुः कफवातपित्तैः
संदृश्यतेस्म क्वचिदेव तस्याम् ॥३१॥

पीतस्रजस्ते शिखरे दधाना
नताश्च भूपाः सुरथं नृपेशम् ।
उच्चैः स्थितं तं विनयेन चापि
स्तुवन्ति भद्रं परमाववश्याः ॥३२॥

गजेन्द्रमेवं च पुनर्ददर्श
तत्रस्थितं चापि वरूथमुच्चैः ।
तत्रापि भूपं च वरासनस्थं
हेमध्वजैश्चापि सुसज्जिते सा ॥३३॥

पयोनिधिस्थं च ददर्श नागं
श्वेतं तयोच्चैर्नृपसेव्यमानम् ।
तत्रापि दोर्दण्डकलाभिरुग्रः
दृष्टः स्थितोऽयं सुरथः प्रतापी ॥३४॥

उच्चैः प्रफुल्लं सुरता कलाभिः
स्वकान्तसम्पदमुदारदृश्यं ।

दृष्ट्वैव सद्यः पुनरेव मोहात्
पपात भूमौ पतिभावनिष्ठा ॥३५॥

ब्रवीति सद्यः पुनरेव मोहा-
द्विचिन्तयन्ती निजकान्तमेव ।
अहो क एते सुरभावजाता
नृपाश्च कान्तो मम किं स भद्रः ॥३६॥

वने वने मे सुरथः प्रवीरो
धर्मस्थितो वा विचरन् महात्मा ।
ध्रुवं स हिंस्रैः पशुभिर्निपातितः
प्रौढैश्च भुक्तः, किमिदं च दृश्यम् ? ॥३७॥

किं वापि वृद्धाः सततं प्रसन्नं
स्वप्नं प्रशंसन्ति हितं ब्रुवन्तः ।
एतादृशं मङ्गलमूलरूपं
शास्त्रेण भद्रं कथितं च लोकैः ॥३८॥

इत्यमियं सुरथस्य च पत्नी
स्वप्नममुं प्रतिरचति चित्ते ।
भाववरैर्मुहुरेव च राज्ञी
शक्तिकला प्रणता किल मोहात् ॥३९॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
राज्याविर हावस्थावर्णनं नाम चतुर्दशः सर्गः ॥



## पञ्चदशः सर्गः

माहेश्वरी सा सुरथस्य पत्नी
स्वप्नं शुभं तं निशि चैव दृष्ट्वा ।
मनः प्रसादं परिचिन्तयन्ती
साफल्यभावेषु परेषु मग्ना ॥१॥

सशोकचिन्ताजलधौ निमग्ना
राज्ञो च भूपेश्वरमेव नाथम् ।
विचिन्तयन्ती परिधानभावं
धत्ते यथा योगकलां स योगी ॥२॥

कियान् स कालो गत एव तस्या-
स्ततश्च साऽमात्यवरं प्रबुद्धम् ।
स्वप्नं बभाषे शिवभावपूर्णं
जिज्ञासमाना च ततः प्रसादम् ॥३॥

अमात्यवृद्धोऽपि सुहृद्भिरिष्टै-
र्जिज्ञासमानः स्वपतिं प्रतिष्ठम् ।
सद्यः प्रतस्थे स तपोवनाय
"कल्याणमानः किल कालवद्धः" ॥४॥

गच्छन् वनार्थं स ददर्श मध्ये
पथक्रमे तं नृपराजसिंहम् ।

शाणोद्धृतं वा मणिरत्नमुग्रं
द्योतं प्रभाभिर्ज्वलितं च भावैः ॥५॥

प्रभाभिरुग्राभिरयं न बाह्यं
सन्दृश्यते तैजसभावनिष्ठः ।
अन्तस्तथादित्यमणिप्रभा सा
निष्ठा प्रतिष्ठा जननीव तस्य ॥६॥

लब्धप्रसादः स च भूपनाथः
सद्यो बभाषे स्वतपः प्रसादम् ।
देव्या वचोगर्भगतः वराख्यं
वर्षत्रयान्ते निजभक्तिलभ्यम् ॥७॥

ततः प्रभृत्येव तयोः प्रवृत्ति-
र्गता जयार्थं रिपुनाशिका च ।
प्रबन्धकूटं च विचारयन्ता-
वुभौ वसन्तौ नृपगेहरत्ने ॥८॥

प्रक्षीयमाणोऽपि विधुः स कृष्णे
पक्षे न ताभ्यां वियति प्रतिष्ठः ।
दृष्टो यथावद् भवचक्रमध्ये
प्रारब्धभोगेषु निमग्न एव ॥९॥

भावप्रबद्धः स च मन्त्रिवृद्धः
पश्यन् विचन्द्रं च विलीयमानम् ।

सद्यो वचांसि प्रतिवक्ति धीरो
वीरो यथा तन्मनसा प्रमाति ॥१०॥

पयोनिधेस्त्वं सुतराज एप
चन्द्रस्वरूपादुपमाधिराजः ।
शम्भोः शिरस्थं च मणीन्द्ररत्नं
क्षीणो विरूपः कथमत्र कृष्णो ॥११॥

किं क्षीयमाणो द्विजराज ! भासि
वियत्प्रभाभिर्निविधाकृतिस्त्वम् ।
ज्योत्स्ना तु काचित् प्रतिमां विधत्तां
क्लिश्नासि चक्षुश्च तव स्वरूपम् ॥१२॥

अमाप्रमां त्वं झटिति प्रयाहि
मा सिन्धुवंशं विकलीकुरुष्व ।
अघं निजं किं प्रतिघोषयन् हा !
दशाप्रकाशं कुरुषे सिपेव । १३॥

नक्षत्ररूपं च निधो ! विधत्तां
वैशिष्ट्यमावं नहि धारय त्वम् ।
क्षुद्रस्वरूपेण विभाहि नाथ !
चन्द्र ! त्वमुच्चैरचरैर रत्न ॥१४॥

ध्रुवं स पक्षस्तव नाथ ! लोके
शुक्लो विशुद्धश्च भविष्यतीति ।

शाणोद्धृतं वा मणिरत्नमुग्रं
चीर्णं प्रभाभिर्ज्वलितं च भावैः ॥५॥

प्रभाभिरुग्राभिरयं न वाह्यं
सन्दृश्यते तैजसभावनिष्ठः ।
अन्तस्तथादित्यमणिप्रभा सा
निष्ठा प्रतिष्ठा जननीव तस्य ॥६॥

लब्धप्रसादः स च भूपनाथः
सद्यो बभाषे स्वतपः प्रसादम् ।
देव्या वचोगर्भगतः वराख्यं
वर्षत्रयान्ते निजभक्तिलभ्यम् ॥७॥

ततः प्रभृत्येव तयोः प्रवृत्ति-
र्गता जयार्थं रिपुनाशिका च ।
प्रबन्धकूटं च विचारयन्ता-
वुभौ वसन्तौ नृपगेहरत्ने ॥८॥

प्रक्षीयमाणोऽपि विधुः स कृष्णे
पक्षे च ताभ्यां वियति प्रतिष्ठः ।
दृष्टो यथावद् भवचक्रमध्ये
प्रारब्धभोगेषु निमग्न एव ॥९॥

भावप्रबद्धः स च मन्त्रिवृद्धः
पश्यन् विचन्द्रं च विलीयमानम् ।

सद्यो वचांसि प्रतिवक्ति धीरो
वीरो यथा तन्मनसा प्रभाति ॥१०॥

पयोनिधेस्त्वं सुतराज एष
चन्द्रस्वरूपादुपमाधिराजः ।
शम्भोः शिरस्थं च मणीन्द्ररत्नं
क्षीणो विरूपः कथमत्र कुप्यसे ॥११॥

किं क्षीयमाणो द्विजराज ! भासि
वियत्प्रभाभिर्विविधाकृतिस्त्वम् ।
ज्योत्स्ना तु काचित् प्रतिमां निधत्तां
क्लिश्नासि चक्षुश्च तव स्वरूपम् ॥१२॥

अमाप्रभां त्वं झटिति प्रयाहि
मा सिन्धुवंशं विकलीकुरुष्व ।
अर्घं निजं किं प्रतिघोषयन् हा !
दशाप्रकाशं कुरुषे मिषेण । १३॥

नक्षत्ररूपं च निधो ! निधत्तां
वैशिष्ट्यभावं नहि धारय त्वम् ।
क्षुद्रस्वरूपेण विभाहि नाथ !
चन्द्र ! त्वमुच्चैरथवैव रक्ष ॥१४॥

ध्रुवं स पक्षस्तव नाथ ! लोके
शुक्लो विशुद्धश्च भविष्यतीति ।

मा याहि चिन्तां प्रकृतिं प्रपन्न-
श्चाशागुणैः स्वं हृदयं तु रक्ष ॥१५॥

यत्नेन यूयं किमिमं विखिन्नं
चिकीर्षथ प्रत्यहमेव नीचाः ।
अनागतोऽपि ध्रुवमेव काले
सम्पूर्णतामेष्यति भूप एषः ॥१६॥

सद्यः स भूपेश्वररत्नमेव
प्रोत्फुल्लभावं मनसा दधानः ।
प्रतिज्ञयाऽसौ च बबन्ध भावै-
रात्मानमेव प्रभया प्रतापी ॥१७॥

न कामभोगं क्वचिदेव धीरः
पत्न्या कयाचिद् भुवि कान्तया वा
अहं करिष्ये मम यावदेत-
द्राज्यं जितं नो मम वश्यमेव ॥१८॥

देवीप्रभावैर्झटितीह मन्त्री
वृद्धः स सद्योऽपरमन्त्रिवृद्धान् ।
सद्धानवन्धैः कलया बबन्ध
शिष्टान्तथान्यान् सुहृदश्च यूनः ॥१९॥

कोषो बलं वापि धनानि तेभ्यः
प्रीत्यैव लब्धानि वरप्रसादात् ।

स बन्धुवर्गादपि भूपराजो
साहाय्यमुग्रं परमं च लेभे ॥२०॥

कियद्भिरेवं स्वहिताय भूपः
सुहृद्भिरग्र्यैः प्रतिसेवितश्च ।
मृधाय सज्जीकृतसैन्यपक्षः
सद्यः प्रतस्थे स्ववरं स्मरन् सः ॥२१॥

सद्यो बली तद्रिपुरेव सैन्यै-
राक्रान्तशक्तिः पतितः क्षणेन ।
पुनश्च मित्रैरपि सैन्यशक्त्या
स्वयं स युद्धोद्यत एव शीघ्रम् ॥२२॥

ततश्च जातं किल संकुलं तद्
युद्धं च सैन्यैः परमं द्वितीयम् ।
लोकप्रशक्तिर्युयुधे परैवं
शक्तेश्च शक्त्या लघुसंख्ययापि ॥२३॥

रहस्यभावेन मुनीन्द्रदत्ता
शिक्षा च यैषा बहुशक्तिकर्त्री ।
तयैव चक्रेश्वर एष वीरो
युद्धप्रमत्तः सहसैव दृष्टः ॥२४॥

अस्त्राणि शस्त्राणि वराणि लोके
दृष्टानि सर्वाणि मृधे प्रभाभिः ।

परस्परं युद्धपराणि साक्षाद्
यथा शरीराणि च वा रिपूणाम् ॥२५॥

यज्जृम्भकास्त्रं सहसैव लब्धं
लोकप्रसिद्धं सुरथेन भक्त्या ।
मुनेः कृपायास्तदिहापि दृश्यं
सैन्येषु मध्ये निजतेजसा वा ॥२६॥

सुप्तेषु सैन्येषु न तावदेष
नृपः कदाचिद् युयुधे स्वशक्त्या ।
लब्धप्रसादः सुरथः प्रभावा-
त्तुत्थापितैर्वा युयुधे पुनः सः ॥२७॥

सा लोकशक्तिः किल मन्त्रशक्त्या
पराजिता शक्तिवरप्रशक्त्या ।
उपस्थिता सूक्ष्मकलाभिरुग्रा
शक्तिर्यथा वापि मृधेऽपि सुप्तः ॥२८॥

दिनैः कियद्भिः सुरथः प्रतिष्ठो
लेभे जयं राज्यगतं हितं च ।
ततश्च शिष्टा रिपवोऽपि वीरा
नताः शरण्यं नृपराजसिंहम् ॥२९॥

धीरः प्रतस्थे शिविराय वीरः
क्लान्तः श्रमेणापि बलेन शत्रोः ।

राज्ञीं प्रियां चापि पुनः स लेभे
श्रियं च नव्यामपि कीर्त्तिफुल्लाम् ॥३०॥

स राजधानीं प्रविवेश राज्या
सहैव सर्वैरपि मन्त्रिवर्गैः ।
नृपो निषण्णो शुशुभे स शुभ्रे
सिंहासने रत्नविभूषिते च ॥३१॥

त्रिभिर्गुणैर्वा पुरुषो यथाऽयं
भाति प्रकृत्या सहितो निषण्णः ।
स मन्त्रिवृद्धैश्च तथैव भूपो
विराजते वा रमयेव राज्या ॥३२॥

शुभे दिने ते च तथा प्रपन्ना-
स्तमेव भूपाः सुरथं प्रशान्तम् ।
मनाङ् न खेदः किल तत्र लभ्यो
नृपेषु कर्त्तव्यपरायणेषु ॥३३॥

सुतास्तथा ते बलिनश्च राज्ञः
स्वयं प्रपन्नाः पितरि प्रणष्टे ।
तमेव भूपं जपशीलवन्तं
"कालेन भद्रं किल जीवमात्रम्" ॥३४॥

पश्चापि सद्यो नृपराजसिंहं
सल्लालनैस्तं प्रियभाववद्भिः ।

प्रमोदयामास च मोदशीला
विरक्तभावाकलितं प्रतिष्ठम् ॥३५॥

प्रजाः प्रजाः स्वा इव भूपराजः
प्रियाः स यत्नेन तथा शशास ।
नृपे यथा ता प्रणयेन भूयो
यद्वा नवान्यं भुवि मेनिरेऽस्मिन् ॥३६॥

प्रेम्णा च नित्यं विनयेन शुद्धो
नीत्या प्रकामं नृपराजसिंहः ।
प्रजागुणैस्ताः स बबन्ध भूभृ-
च्छ्रियः कलाभिर्लसितोऽपि बुद्धया ॥३७॥

प्रारब्धशाणोत्कषणेन शुद्धो
नृपाधिराजः स महौ च दोषान् ।
चिच्छेद तीक्ष्णश्च विपत्तृणानि
स्वसिस्वरूपः शिवमावहन् वा ॥३८॥

दावानलो हि विपदां सद्भक्तिदीपशिखः स भूपालः ।
वंशं स्वकीयमुच्चैर्दीपयति निविधप्रकारेण ॥३९॥

विधिनाऽनेन नृपेशः प्रतिज्ञां स्वीयां पूरयित्वाऽसौ ।
परिव्रजति स कामेन पत्नीं प्रियमिव सदोज्ज्वलिताम् ॥४०॥

श्रीश्च राज्ञी सममेव तं विनोदयामास मान्त्रैः ।
धरा च सा प्राणेशं रविरमसविभाक्कुसुमफलैः ॥४१॥

इति श्रीहेमधारीसिंहशर्मरचिते सुरथचरिते महाकाव्ये
राज्यप्राप्तिर्नाम पञ्चदशः सर्गः ।



## षोडशः सर्गः

ततश्च सन्ध्या दिवसस्य पत्नी
समागता प्रीतियुता नृपेशम् ।
सदैव राज्या पतिभावनिष्ठा
कृताभिसारा रमणप्रलुब्धा ॥१॥

दिव्याङ्गरागा सुरभावजाता
दोर्दण्डमार्त्तण्डकलाप्रभाभिः ।
मुद्दी च चन्द्रप्रभया प्रकामं
कामायमानेव समीपमेति ॥२॥

रसेश्वरोऽसौ सुरयप्रवीरो
भावैरनेकैः परिपश्यतीमाम् ।
पर्वांसि भिन्नानि रविं च सन्ध्यां
ब्रूते प्रसिद्धो विविधप्रकारैः ॥३॥

सन्ध्यानुरक्तो हि यत्र यासि
तयैव सार्द्धं विधिचोदितस्त्वम् ।
रवे ! रमस्व प्रभया समेतो
देशे विविक्ते च निशां नयापि ॥४॥

लोकान्तरं त्वं च रवे ! प्रयासि
सन्ध्याप्रसङ्गाद् पतितश्च सिन्धौ ।

स्पृष्टः पुनस्त्वं च तयान्यलोके
तामेव हित्वा प्रवरो विभासि ॥५॥

लब्ध्वा स्वशक्तिं च रवेः प्रतापात्
तारागणैस्त्वं ललितो रमस्व ।
महत्प्रतापाच्च महत्प्रतापो
सञ्जायते कालवशेन रम्यः ॥६॥

एकैव सन्ध्या प्रतिभासि लोके
सेयं च कस्येह लता सुरम्या ।
तेजोद्वयं वा रमणप्रलुब्धं
स्वकीयकामार्जितमेव भुङ्क्ते ॥७॥

धन्यासि सन्ध्ये ! समयप्रभावात्
तेजोद्वयेनापि समं सुभोग्या ।
रवेः क्व तीव्रत्वमिह प्रभाभिः
क्व मार्दवं तच्च विधोः सुरम्यम् ॥८॥

रवेः स्वशक्तिस्त्वमसीह सन्ध्ये !
शास्त्रे प्रदिष्टा हि तथैव रम्ये ।
कालं च कञ्चिद् विधिचोदितेन
तेनैव सार्द्धं ललिते ! रमस्व ॥९॥

किं वा रवे ! ते ललिता स्वशक्तिः
सन्ध्या यथेयं प्रतिभाति लोके ।

वचोभिरानन्दमयैः प्रसन्नो
विकाशभावं नयतीह शान्तः ॥२०॥

त्वमेव शम्भोः सुभगे ललाटे
धृत्वा कृतीव प्रतिभासि शुद्धः ।
जटाकलापे हरशेखरायां
तथैव विम्बः प्रतिबिम्बितोऽपि ॥२१॥

कालस्य हेतुः स च नर्मभावः
कालेन वायं प्रतनोति दुःखम् ।
सदौषधीनाममृतापिधानं
सञ्जायते वा रसपोषणाय ॥२२॥

आत्मानमेव प्रथितो निलीय
तैर्वारिवाहैर्विविधैः स चन्द्रः ।
वर्षत्यजस्रं च जलानि लोके
काले पुनर्वै प्रतिभाति बिम्बे ॥२३॥

ते पुण्यवन्तः किल चन्द्रलोके
वसन्ति काले निजभोगनिष्ठाः ।
आनन्दभावेन सहामरत्वं
तेनापि तस्य प्रथितं सुखेन ॥२४॥

ततः प्रभृत्येव च भूपराजो
मनोरमां तां प्रतिसेव्यमानाम् ।

आनन्दयत्यद्भुत केलिशक्ति-
र्भावैरनेकैः परिरम्भणैश्च ॥२५॥

रसप्रवृत्तः स वरप्रसादा-
च्चन्द्रस्य बिम्बादपि पोषितोऽसौ।
बिम्बाधरस्थः परमोऽमृतोऽयं
प्रपीयते तेन नृपेण साक्षात् ॥२६॥

इत्थं माक्षाद् वरकेशपाशो
बबन्ध भूपेश्वरमुग्ररूपम्।
अतश्च पाशः स्वयमेव तेन
राज्ञा निबद्धो रतिकामुकेन ॥२७॥

नेत्रे प्रसन्ने नृपराजपत्न्याः
सकज्जले ते परिशोभमाने।
मुहुर्मुहुस्ते सुरथेन सद्यः
प्रचुम्बिते चासवघूर्णितेन ॥२८॥

ताम्बूलरागः स च राजरागं
जिगाय लोकोत्तरमानपूर्णः।
राज्ञां तु रागे यत एव पापा
वमन्ति; नो ते किल धर्मपत्न्याम् ॥२९॥

मर्त्यस्य लोकस्य च चिह्नमेकं
तिलः कपोले शुशुभे मृगाक्ष्याः।

सुवर्णवर्णेषु च विग्रहेषु
श्यामस्वभावोऽपि हिताय तस्य ॥३०॥

शुभ्रांशुरत्नं न हिरण्यभूषा
राज्याश्च देहे शुशुभे कथञ्चित् ।
यतः प्रकृत्या मधुरे स्वरूपे
दोषाय भूषा किल जायते सा ॥३१॥

सिन्दूररागः शुशुभे च तस्याः
सीमन्तभागे गिरिजाप्रसादात् ।
अन्यत्र गौराङ्गगतो न रङ्गः
शोणः कदाचित् सुभगाय लोके ॥३२॥

नासागतास्ता सुभगाश्च मुक्ता
धन्या विमुक्ता इव भान्ति नूनम् ।
कामप्रपञ्चे न हिताय ता वा
मुक्ता यतो नो किल लोकदक्षाः ॥३३॥

कायश्च तस्या गिरजावरेभ्यः
स्वरप्सरोयोग्यतया विभाति ।
रवेर्यतोऽयं भविता च तस्याः
पतिर्मनुः कालवशात्तु सौरः ॥३४॥

किं श्रीः किमिन्दुः स्वयमेव पद्मा
पद्मस्वरूपा मुकुरप्रभा सा ।

किं माननं वा प्रतिभाति तस्य
विस्पष्टमङ्गैः स्मितभावपूर्णम् ॥३५॥

तस्याः कुचौ श्याममुखौ रतौ तौ
तमः प्रभावादपि दिव्यदृष्टिम् ।
अद्वैतभावाय रजःक्षयेण
प्रोद्भासयन्तौ त्रिगुणान्तकौ वा ॥३६॥

कुचप्रभावाद्धृदयं च तस्या
विशालभावं विजहौ प्रकृत्या ।
विशालभावः कुचयोः क्रमेण
जातो मृगाक्ष्याः समदस्तथोच्चैः ॥३७॥

उच्चैः कुचौ तौ किल नाकराज्यं
वलित्रयं तद्ध्रुवमेव मार्गम् ।
सोपानभावेन परेण चेदं
सदूर्ध्वदृष्टिं तनुते भवाय ॥३८॥

रोमावली वा मृदुनाभिजाता
निःश्रेणिकेयं त्रिदशेश्वराणाम् ।
तदूर्ध्वं प्रवृत्ता विधुचुम्बनार्थं
पिपीलिकानामथवैव धारा ॥३९॥

ऊरू च तस्या मकरध्वजार्यं
दुर्गं प्रसिद्धं रतिवासहेतोः ।

रहस्यभावाश्रितमेव लोके
कन्दर्पनीत्या ध्रुवमेतदुष्णम् ॥४०॥

तत्पादयुग्मं स्थलपद्मशोभां
तनोति भूमौ सिकताप्रदेशे ।
अधः कृतोऽसौ भुवि भाति गत्या
तेनापि रागो नृपराजपत्न्याः ॥४१॥

तडिल्लता सा ललिता सुवर्णा
सुवर्णवर्णा नृपराजपत्नी ।
नगेन्द्रपुत्र्याश्च वरप्रसादात्
क्षणेन शुभ्रा परिवर्त्तमाना ॥४२॥

अनश्वकाराभरणं न तत्र
बाहुं तदीयं रतिभावनिष्ठम् ।
बाधाविशेषस्य च हेतुभिर्वा
सुहृत्क्रियाभिः परिवर्ज्यते तत् ॥४३॥

वयश्च तस्या नितरां प्रसिद्धं
मदात्ययेनेव विभाति रक्तम् ।
सक्तो नृपेशो रतिभावनाभि-
र्यस्यां रतीशप्रभया प्रकामम् ॥४४॥

राज्ञ्याः शरीरं स्वत एव शुभ्रं
नापेक्षते वाभरणानि शुद्धम् ।

चकासते वा निजतेजसैव
महान्न चान्यत् सहते हि तेजः ॥४५॥

सीमन्तभागे च सहालकेन
सिन्दूररागः शुशुभे विशुद्धः।
सौभाग्यकेतावपि कृष्णवर्णे
हेतुर्विशेषो नहि तत्र चान्यः ॥४६॥

सिंहासने रत्नपरिष्कृते वा
युक्तासने सा शुशुभे च राज्ञा।
सहैव लक्ष्म्या नहि तत्र भावः
सापत्न्यजोऽसौ हृदये च तस्याः ॥४७॥

राज्ञी प्रिया सा च रवेः प्रभावाद्
राज्ञस्तपोभिर्नरदेवरम्या।
एकैव शक्तिः प्रतिभाति युक्ता
स्थितिप्रधाना वरभावजाता ॥४८॥

विशालभावो महतां च नूनं
प्रजायते नो मनसो विकारः।
अतः प्रभाभिर्वरभावनाभिः
सहैव लक्ष्म्या प्रतिभाति राज्ञी ॥४९॥

या लोकमाता परिगीयते मा
सैवेह लोके नृपतीश्वरी वा।

विभाति नूनं हि वरप्रसादा-
न्नवेशभिन्ना क्वचिदेव राज्ञी ॥५०॥

दिवापि राज्ञी शुशुभे परेव
रम्या यतः सा रवितेजसापि ।
श्रियः प्रभाभिर्वरभावनाभि-
र्भावप्रजातं ध्रुवमेव रूपम् ॥५१॥

इनांशेयं शुद्धा तरणिकरतेजोभिरमरा
श्रिया भिन्ना राज्ञी भुवनपतिरम्या च रतिदा ।
लसद्वाणीतुल्या भृगुरचितशास्त्रार्थगृहिणी
रतिं धत्ते राज्ञे विविधविधिभावैरपि मुदा ॥५२॥

मार्त्तण्डाश्रयतत्त्वभूमिरखिलाशक्तिप्रभावोज्ज्वला
श्रीरेषा च जगत्प्रपञ्चरचनारत्नाभिरन्तःप्रभा ।
भावैरन्तरितापि लोकहृदया शक्तिः स्वयं कीर्तिता
सा पुष्णाति नृपेश्वरौ च परमा वर्गैश्चतुर्भिः शिवा ॥५३॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
राज्यभोगो नाम षोडशः सर्गः ॥

## सप्तदशः सर्गः

पत्नी समाधेर्नृपराजवृत्तं
श्रुत्वा गृहे सा पतिरत्नमेवम् ।
जिज्ञासमाना विललाप मोहाद्
रुरोद चान्तर्बहिरप्यधीरा ॥१॥

पतिर्ममान्तर्हृदयेशरत्नं
गतः क मत्तो मम भाग्यदोषात् ।
अहं त्वनाथा विधवेव मोहान्
प्रिये स्मरन्ती पतिभावनिष्ठा ॥२॥

प्रत्यागतोऽयं किल भूपराजो
ध्रुवं मृतो मे पतिरेव भूपः ।
यतो न लभ्यो मम जीवनेशः
प्रत्यक्षभावः परमप्रमाणम् ॥३॥

पुत्रेण किं मे स्नुषया तथा वा
पौत्रेण वा किं मम वंशवृद्ध्या ।
नवीनवैधव्यगतं च दुःखं
केनापि नैव प्रतिहन्यते तत् ॥४॥

क तत्सुखं मे गृहभावरम्यं
रतिः क सा मे प्रणयोऽपि वा मे ।

हतो ममान्तः पतिरेव साक्षाद्
हिंस्रेण केनापि वनस्थितेन ॥५॥

पुत्रः क्व वायं हृदयेशजातो
न कारणं तद् क्वचिदेव लभ्यम् ।
यतोऽयमुच्चैः सुत एष जातः
कार्येण वा किं निहितश्च हेतुः ॥६॥

अस्मासु युक्तासु सुतास्त्वनेका
जनिष्यमाणा रतिकेलिसाध्याः ।
एकः पतिर्नो मम भाग्यदोषात्
कुत्रापि लभ्यो मम वंशहेतुः ॥७॥

स्नुषा किमेषा मम जीवनान्तं
भाग्येन यस्या निहतो हि वैश्यः ।
स्वयं धनेशः किल यस्य पुत्रः
स किं हतो मे हृदयाब्जमित्रः ॥८॥

हृदब्जमित्रो मम मित्रमेव
संप्रस्थितो हा ! त्रिदशेश्वरेभ्यः ।
प्राप्तं सुखं वा विविधं च मुक्तिं
परां विशुद्धामथवैव बोधात् ॥९॥

धन्याः किमेते चिरजीविनस्ते
सुखेन ये वा निवसन्ति लोके ।

मन्ये कलत्रं सुहृदं विहाय
वाञ्छन्ति ये वा चिरजीविभावम् ॥१०॥

किं वा कलत्रं पुरुषस्य किं तत्
स्त्रियः कलत्रं हृदयेश एव ।
वैधव्यभावः किल धन्य एष
यत्रैव पत्न्यो निवसन्ति लोके ॥११॥

किं वा द्वितीयः पतिरेव कार्यो
विवाहरीत्या च यथायमेव ।
धिग् भावमेतं नरकप्रधानं
पतिश्च यस्मिन् सुरतप्रधानः ॥१२॥

साहं स्वकीयां कुलदेवतां ता-
माराधनाभिर्मनसा भजामि ।
मनस्तु शान्तिं सहसैव धत्ते
सतां प्रमाणं परमं हि चित्तम् ॥१३॥

तयोश्च पुत्रः स वरप्रसादा
न्निर्वेदभावेन विभाति खिन्नः ।
आत्मानमेवं परिभर्त्सयन् स
श्रुत्वापि मातुर्वचनं वचोभिः ॥१४॥

कुपुत्रशीर्षध्वज एव सोऽहं
पापैरनेकैर्विनिपातितो वा ।

मया न चायं निकलीकृतोऽपि
वृद्धो गुरुर्मे मनसाऽथवा वा ॥२५॥

परस्य पुत्र्यो यत एव बध्वः
सदैव हेया मनसा च वाचा ।
परत्र दोषा निवसन्ति लोके
गुणा न शुद्धाः क्वचिदेव हृद्याः ॥२६॥

तथापि दौर्भाग्यमिदं ममान्त-
र्ध्रुवं व्यथाभिः प्रतिबाधते हा !
श्वश्रूर्ममेयं मम वापि नाथो
दोषस्य भूमिः परिगीयते सा ॥२७॥

तन्मार्गणं वा सपदीह कार्यं
गुरोः प्रवृद्धस्य वने च लोके ।
यथा तथायं परमो महात्मा
प्रबन्धनीयो मनसापि साक्षात् ॥२८॥

आरोदनं घोरमिदं गृहान्त-
र्वैक्लव्यमेतच्च तदाश्रमस्य ।
तथैवमाक्रान्तमिति द्वयेन
गृहं यथा शक्तिरपि प्रबुद्धा ॥२९॥

अन्तःपुरेषु प्रमदाजनानां
भूपेश्वरस्यापि च कश्चिदेशः ।

प्रेष्यस्तथा प्रेषित एव साक्षाद्
भूपेश्वरेणापि च भूपराज्ञ्या ॥३०॥

विनीतभावः स च वक्ति साक्षाद्
राज्ञ्याश्च वाचा नृपतीश्वरस्य ।
समाधिवैश्यो निभृतोऽस्ति लोके
ज्ञानी तथान्तर्मुदितः प्रशान्तः ॥३१॥

सा वैश्यपत्नी पतिभावनिष्ठा
ततश्च भावैर्विविधैरधीरा ।
आच्छादितेयं युगपत् प्रवृद्धा
गृहैरनेकैरपि वा यथा सा ॥३२॥

विलापमुग्रं प्रकरोति शिष्टा
भावैरनेकैरपि बाधिता सा ।
स प्रीतिग्रन्थश्च तयोर्यथैव
स्यूतो विशिष्टो द्विगुणीकृतो वा ॥३३॥

ज्ञानी पतिर्मे सहि वर्ततेऽन्त-
र्मुदा प्रशान्तो यदि वापि धीरः ।
तथापि किं मे प्रणयं गृहं वा
स्मरिष्यति प्रीतिवशान्न मोहम् ॥३४॥

ज्ञानी च कोऽयं भवभावमोहान्-
मुक्तश्च जीवन् भवनिन्दया वा ।

प्राप्तः प्रबोधः किल दैवभावात्
किं वा सदान्तर्मुदितः प्रसादात् ॥३५॥

विरक्तिभावेन स वैश्यवीरो
लेभे प्रबोधं यदि दैवयोगात् ।
अस्माकमुच्चैर्नहि कापि दैवा-
दाशा तदा नूनमिय मतिर्मे ॥३६॥

कर्त्तव्यनिष्ठो यदि वा स धीरो
वरप्रसादात् परमं प्रबोधम् ।
लब्ध्वा सुदान्तः परमं प्रसादं
धत्ते तदा नो क्षतिरप्यनिष्टा ॥३७॥

नृपस्य सत्प्रादमथात्र मातु-
र्वचश्च सद्यो मनसा निशम्य ।
पुनर्बभाषे च धनेश एव
तामेव साक्षाद् विधिनोदितोऽयम् ॥३८॥

अयं च तावद् युवयोस्तनूजो
वने म यास्यत्यतिभक्तिनिष्ठः ।
प्रष्टुं समाधि पितरं प्रबुद्धं
सज्ज्ञानिनं तं सुरभावनिष्ठम् ॥३९॥

वधूस्तवेयं ससुतास्त्र तावत्
स्थास्यत्यतन्द्रा पदयोस्तवैव ।

इमां च सेव्यां गृहदेवतां तां
भजस्व भक्त्या जननि ! त्वमेव ॥४०॥

शिशुमुखमतिलोलं वीक्ष्य हृद्भावनाभि-
र्निजमनसि स धीरो बाष्पवेगावरुद्धः ।
क्षणजनितविबोधाद् भक्तिनम्रो धनेशः
क्षणमिह करयुग्मं सोऽपि धत्तेऽतिबद्धम् ॥४१॥

इत्थमयं मनसापि धनेशो
भक्तिवरं सुकृती च दधानः ।
याति वने जनकस्य समीपं
भावशतस्य भरेण सहापि ॥४२॥

इति श्रीक्षेमधारिसिंहशर्मरचिते सुरथचरिते महाकाव्ये
वैश्यपरिवारनिर्वेदो नाम सप्तदशः सर्गः ॥



## अष्टादशः सर्गः

वैश्यात्मजोऽपि विमलो निजभक्तिभावाद्
द्रष्टुं गतो निजगुरुं जनकं विशुद्धम् ।
क्षिप्रं वनं मुनिजनाध्युषितं धनेशः
प्राप्तो मुदा प्रथममेव तपोवनं तत् ॥१॥

तज्जन्मदश्च विमलः स समाधिवैश्यो
दान्तो मुदा मुनिगृहे परबोधबुद्धः ।
कर्त्तव्यकोटिमिहलोकगतं प्रसन्नो
देवीवरेण मनुते परमं प्रशान्तः ॥२॥

पुत्रं धनेशमतिभक्तिभरं विनीतं
सद्यः समागतमिमं मनसैव बुद्ध्वा ।
वृद्धोऽपि सोऽति विनयं सुतगं तथा च
हृष्टः सुताननपरस्मृतिभावनाभिः ॥३॥

ज्ञानी च यत्नमिह कञ्चिदपि प्रसन्नो
मोहात् करोति निजकामवशः प्रशान्तः ।
भावस्तु तस्य हृदये मुदिते प्रबुद्धे
सञ्जायते किल निमेषमितः सबोधः ॥४॥

तस्मिन् सुतः सविनयो मननप्रधाने
काले च भक्तिलमितः प्रतिलज्जितोऽपि ।

सोऽयं पितुश्च चरणौ प्रणतो मुदेव
बद्धाञ्जलिर्नयनवारिकृतावरोधः ॥५॥

तूष्णीं स्थितः स विनयान्नहि वक्ति किञ्चिद्
भावश्च नेत्रपयसा प्रविकाशमेति ।
किं वापि तज्जननतन्तुकुलं प्रसिद्धं
सम्बन्धभावविधिना स्वयमेव भाति ॥६॥

सोऽयं तथापि परमं वरमेव चित्ते
स्मृत्वा मनो न कुरुते विकलं नवान्तः ।
शक्त्यैव भाति मुदितः स पिता प्रशान्तो
वैक्लव्यबन्धनगतस्तु स एव पुत्रः ॥७॥

भूते ॥ चिन्तितमना विनयेन पुत्रो
भक्त्या कृताञ्जलिपरः स समाधिजातः ।
सत्कारणं स्वपितरं वरभावभव्यं
"धृष्टो धनेश इह नौति कृतापराधः" ॥८॥

अन्येऽपि ते गुरुपदा जनकोपमां तां
संलेभिरे जगति भावभरप्रसादात् ।
तैश्चापि पुत्र इतिहेतुगता क्षमा सा
दत्ता मुहुर्मुहुरियं च कथा प्रसिद्धा ॥९॥

क्षुब्धोऽतिभव्यमृदुभावरतानि तस्य
श्रुत्वा वचांसि च सुतस्य समाधिरेषः ।

यश्चन्द्रकान्तमणिभावगतो द्रवोऽयं
ज्योत्स्नाकरेभ्य इह भाति स किं न चित्रः ॥१०॥

ज्ञानी गृहेऽपि लसितं निजधर्ममेव
धत्ते हृदापि मनसा न च तेन हानिः ।
सञ्जायते मुनिवरस्य वरप्रसादात्
कर्त्तव्यभावलसिता अपि भान्ति भावाः ॥११॥

वैश्यात्मजेन पुनरेव विनीतभावै-
रभ्यर्थ्यते स च पिता गमनाय गेहे ।
बद्धाञ्जलिः प्रणतिभावभरः स पुत्र-
स्तस्थौ क्षणं किल नतः पितरं प्रबुद्धम् ॥१२॥

वृद्धोऽपि सोऽथ समयं कमपीह वैश्यो
भावैरयं च नितरां पुनरेव चित्ते ।
कर्त्तव्यकोटिकलितं गमनं सुबुद्ध्या
ज्ञानेन चापि मनुते दृढमेव सद्यः ॥१३॥

स प्रस्थितो निजसुतेन सहैव वैश्यः
सम्पूजितो मुनिवरेण नरेण चापि ।
क्षुद्रोऽपि सोऽतिघनलोभपरोऽतिमोहा-
जीवद्-विमुक्त इति विस्मित एव मेधाः ॥१४॥

कालेन तौ च जगतां परदेवतायाः
शक्तिप्रसादविभवेन गृहं गतौ तौ ।

सद्यस्तु तान् गृहमणीन् निजचक्षुषाऽपि
पश्यन् प्रसन्न इव भाति कलाप्रपूर्णान् ॥१५॥

पुत्रश्च तस्य विनयात् स्वसुतं प्रफुल्लं
पत्न्या सहैव स हि चोदयति प्रसन्नम् ।
बालोऽपि तं प्रणतिभिः प्रणतः प्रणौति
बद्धाञ्जलिः करयुगेन शिशुप्रभावात् ॥१६॥

तस्य स्नुषा प्रथममेव विशुद्धिभावं
सन्दर्शयत्यखिलभक्तिभरं प्रफुल्लम् ॥
व्रीडां जहाति च मनो गुरुपादयुग्मे
धत्ते क्षणेन हृदये गुरुभक्तिभावम् ॥१७॥

अन्तः स्फुरद्-विविधभावभरोऽपि वैश्यो
जीवद्-विमुक्त इति वा प्रथितश्च शुद्धः ।
सौम्योऽपि नैव भुवने स वरप्रसादा-
दासक्तिभावमिह सोऽथ कदापि धत्ते ॥१८॥.

वैश्यप्रियापि सततं निजभक्तिभावं
स्नेहान्वितं प्रकुरुते सपदि प्रकाशम् ।
ईषद्विहासपरिमिश्रितमेव गेहे
वाष्पाम्भसैव न च वाक्यकलाभिरेषा ॥१९॥

पुत्रोऽपि तस्य सततं पितरं प्रबुद्धं
बुद्ध्याऽथवापि वचसाप्यनुवर्त्तते सः ।

कार्यप्रबन्धविषया अपि भावशुद्धे
तस्मिन् सदैव विहिता निहिताश्च गेहे ॥२०॥

वाणिज्यकार्यमपि वा निहितं च तस्मिन्
पुत्रेण तेन मनसा वचसा प्रसिद्धम् ।
वर्णाश्रमीयमपि यच्च गृहे समस्तं
कार्यं तथात्र भुवि तच्च परं सुभक्त्या ॥२१॥

वृद्धश्च वृद्ध इह वैश्यवरः स्वयं तु
मायाभियानकरणे स्वगृहे प्रवृत्तः ।
प्रोत्साहयुत् प्रकुरुते नहि वापि कार्ये
वाणिज्यजं कथमपीह तथा मुदैव ॥२२॥

पश्चात् समस्तपरिनिष्ठितभावनाभिः
कर्त्तव्यकोटिमिह यावदपि प्रपन्नः ।
वृद्धोऽपि सोऽतिनिपुणः कुरुते च कर्म्म
धत्ते न कञ्चिदपि तत्र तथा प्रसादम् ॥२३॥

ज्ञानं न नष्टमपि तस्य तथा न कृत्यं
देव्या वरेण लसितेन तथा मुनेर्वा ।
स्वाशीर्वचोभिरथ नापि कदापि वृत्तिः
शैथिल्यभावमपि सा परमा विधत्ते ॥२४॥

द्रव्यप्रसङ्गमपि स प्रकरोति तावत्
कर्माणि वर्णकलितानि मुदैव वृद्धः ।

देवीवरेण स हि बुद्ध इति प्रसिद्ध-
स्तत्त्वं च येन सकलं परिबुध्यते तत् ॥२५॥

कालक्रमेण भवनं निविशाश्च लोका
द्रष्टुं तमेव विधिना यशसा प्रसिद्धम् ।
प्राप्ता प्रयोजनवशादपि बोधहेतो—
र्जीवद्विमुक्त इति वा प्रथितो यतोऽयम् ॥२६॥

ते चापि नीतिनिपुणा वणिजः सुभक्त्या
द्रव्यप्रयोगकरणाय तथाऽधमर्णाः ।
पश्यन्ति तं गृहमुनिं निजकार्यहेतोः
सोऽयं समाधिरपि तेन न भाति बद्धः ॥२७॥

वृद्धस्य तस्य वचनं मननप्रसादात्
कालेन तथ्यमिह वा भुवि जायते तत् ।
यच्चेतसा स हि मुदा वदति स्वबुद्ध्या
प्रेम्णाऽथवापि कृपया जनकार्यहेतोः ॥२८॥

सोऽयं क्रमेण भुवने भवति प्रतिष्ठः
संसारकार्यनिपुणो भवतत्त्वविद्वा ।
लोकद्वये स हि चमत्कृत एव वृद्धः
सल्लक्षणैरपि सदा जगतीह बुद्धः ॥२९॥

ते चापि तं मुनिवरं प्रथितं समाधिं
पृच्छन्ति तत्त्वमिह यद् गृहमेधिनो वा ।

ज्ञानी स येन भवने स्वयमेव लोके
सञ्ज्ञायते निजकलाभिरपि प्रसिद्धः ॥३०॥

सद्यः समाधिरपि तत्त्वमिदं स वक्ति
कर्त्तव्यनिष्ठमिह वाऽखिल योगनिष्ठम् ।
धत्ते प्रबोधरविदीधितिफुल्लमेव-
मीषत्प्रहासकलितं सुभगं मुखाब्जम् ॥३१॥

संसारचक्रपतितः सकलोऽपि लोकः
कार्य्याणि जोषमनिशं कुरुते प्रकाशम् ।
चित्तेन लक्ष्यविकलेन स वापि शान्त्या
प्रोद्योजितो जगति भावशतेन वापि ॥३२॥

ज्ञानी तु कृत्यमिह सर्वमपि प्रपञ्चं
यावद् बुधः समनुते क्षणिकस्वरूपम् ।
किं वापि कालकलितं सकलं च विश्वं
मिथ्येतिभावमिह वा मनुते स्वबुद्ध्या ॥३३॥

कश्चित्तु विश्वमपि तन्मनुते प्रपञ्चं
हेयं सदैव भवपाशविमोचनाय ।
संन्यासधर्मनिपुणः कुरुते न कर्म
सोऽयं सदा जगति निष्क्रियतां गतोऽपि ॥३४॥

अन्यश्च चक्रपतितं सकलं सुकृत्यं
शान्तः करोति न च कर्मफलाय तावत् ।

कालेन कर्मविधिना फलतां प्रयाति
बन्धो न तेन भवतीह विचित्रमेतत् ॥३५॥

ज्ञानी सदैव निजकर्म करोति धीर-
श्चित्तेन वापि वपुषा सततं प्रशान्तः ।
सोऽयं तु सर्वमपि कामयते प्रकामं
कर्त्तव्यकोटिपतितं नहि तेन हानिः ॥३६॥

जीवद्विमुक्त इह वा भुवि कोऽपि धन्यः
सर्वं स्वकर्म विधिना कुरुते सुबुद्ध्या ।
हानिर्न तेन भवति प्रथितस्य तस्य
पापं न वापि भुवि सोऽथ परः प्रबुद्धः ॥३७॥

जीवद्विमुक्त इति वा भुवि कथ्यतां स
ज्ञानीति वापि भुवने प्रथितोऽपि भूयात् ।
भावोऽपि तस्य विविधो गृहिणश्च लोके
सञ्जायते नहि च तेन तथास्य बन्धः ॥३८॥

नातः परं भुवि कदापि नरस्तु वान्यो
बुद्ध्यैव सोऽपि भवने भवति प्रतिष्ठः ।
वृत्तिस्तु सा बहिरथो भवतीह बोध्या
नान्तः कदापि परमा भुवि बुध्यते वा ॥३९॥

देवी सैषा भुवनजननी लोककल्याणनिष्ठा
ज्ञानी ज्ञेयं सकलमपि वा ज्ञानमन्तः स्वरूपा ।

"सुरथ-चरित" महाकाव्यस्य निर्मातुः
पं० क्षेमधारीसिंह शर्मणः समाधौ
श्री १०८ क्षेमनाथशिवमन्दिरम्



## श्री १०८ क्षेमनाथशिवमन्दिरे शिलालेखः

॥ श्री १०८ क्षेमनाथो विजयतेतराम् ॥

"जयतु जयतु कश्चित् क्षेमनाथः शरण्यः
शिव-शिव-पदवाच्य श्रीनिकेतं मुदीशो ।
जयतु जयतु काचित् शङ्करीशङ्करात्तिः
शुभनिचयस्वरूपा शाम्भवाना सुपूज्या" ॥१॥

( श्रीशिवस्तुतिमाला )

आसीन्माधव-मैथिलेन्द्रतनयः श्रीकीर्त्तिसिंहो नृपः
तत्सूनोर्गिरिधारिणः सुतवरः श्रीहर्षधारी प्रभुः ।
तत्सूनुर्विदिताखिलागमविधिर्वेदान्तविद्यानिधि—
देव्याराधनलब्धमुक्तिविभवः श्रीक्षेमधारीसुधीः ॥२॥

तान्त्रिकरहस्यरक्षिता. श्रीशिवस्तुतिमालादयो येन ।
रचिता बहवो ग्रन्था सुरथचरित्रं महाकाव्यम् ॥३॥

येनालोडितमाङ्गलशास्त्रमखिलं पौरस्त्यशास्त्रं तथा
छात्राश्चाप्यनुरागिताः प्रतिभयासन्तर्पितापण्डिताः ।
सौधालं विरचय्य तस्य जनकस्येद समाधिस्थले
श्यामा बुद्धि-जयैरसौ शुभकरः श्रीशङ्करः स्थापितः ॥४॥

श्री १०८ क्षेमनाथशिवस्थापनम्

( १९६६ ई० )

| *जन्मतिथि :* | *निधनतिथि :* |
|---|---|
| फाल्गुनकृष्णादशमी संवत् १९५० | मदन त्रयोदशी संवत् २०१८ |
| १८९४ ई० | २९-३-६१ ई० |

*रचयिता*

श्रीतेजनाथ(झा)शर्मा स्मरणीयस्य जमाता

# शुद्धिपत्रम्

प्रकाशनेऽस्मिन् बह्वोऽशुद्धयः प्रयासनिरस्ता अप्यवस्थिता एवेति खिद्यते चेतः। कण्टकानुकीर्णतावशादपि घधयोर्भमयोर्बवयो रेफानुस्वारविसर्गाणां मात्राणाञ्चाशुद्धयो जाताः। समस्तपदेषु पदयोः पदानां वा पृथक्ताऽपि बहुत्र। ता एता अशुद्धीः स्वयं संशोध्य पाठकाः पठन्तु पुस्तकमिदमिति प्रार्थयामः क्षमां याचयमानाः, नीचैरुपस्थापयामश्च महाऽशुद्धीनां शुद्धिपत्रम्। कृपया प्रथमं संशोध्य पठनीयम्।

## भूमिकायाम्

| पृष्ठम् | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ६ | २६ | भूमाव | भूम्यव |
| १३ | ३ | मुनीन्द्रः | मुनीन्द्रैः |
| १४ | २ | स्मरश्च | स्मरंश्च |
| १४ | २१ | मुक्ति | मुक्ति |

## मूलग्रन्थे

| पृष्ठम् | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| २ | १३ | मीदृशा | कीदृशी |
| ५ | २ | प्रमाथा | प्रमीता |
| ८ | २३ | सुपुत्रे | सुपत्रे |
| १७ | १६ | वाणिज्ञ | वणिज्ञं |
| १८ | ८ | स्थिरत्वं | स्थिरत्वं |
| २३ | २ | दंशा | दंशाः |
| २३ | १८ | भयमांध्ये | मांयमध्ये |
| ३३ | १५ | विविध | विविध |
| ३३ | १६ | कीर्ति | कीर्त्तिं |
| ४१ | ११ | कीर्ति | कीर्त्तिं |

| पृष्ठम् | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ४१ | १८ | दृंष्टि | दृंष्टि |
| ४७ | १७ | पातिम् | पतिम् |
| ५२ | १६ | त्यक्तो | त्यक्तो |
| ७४ | २ | भक्षी | भक्षी |
| ७७ | ४ | यदुर्वरं | यद्वर |
| ९३ | १० | महात्म्य | माहात्म्य |
| ९५ | ६ | जहे | जहे |
| ९८ | १३ | शयानास् | शयानान् |
| १०० | ७ | गुणोघै | गुणौघै |
| १०४ | १३ | निर्विषणो | निर्विषणो |
| १०५ | १६ | य | या |
| १०६ | ९ | प्रहास्यामि | प्रहास्यामि |
| १०७ | ६ | नयनयोरविपय | नयनयोर्विलयं |
| १११ | ४ | शरणा | शरणा |
| ११२ | ३ | ध्र | ध्र |
| ११४ | ४ | सदेव | सदैव |
| ११५ | १९ | भ्रुवाण | ब्रुवाण |
| १२६ | १० | गर्भगत | गर्भगतं |
| १२९ | १२ | तद् | तच् |
| १३९ | ६ | भृतो | सृतो |
| १४६ | ३ | हिंस्रेण | हिंस्रेण |
| १४९ | १० | माध्येव | मध्येव |
| १४९ | १५ | पुण्याजित | पुण्यार्जित |
| १५८ | २ | कार्यं | कार्यं |
| १६३ | ११ | देव्या | दृंव्या |
| १६३ | २४ | जमाता | जामाता |